# अथ बृहत्पाराशरीयविषयानुक्रमणिकाप्रारंभः।

इति विषयसूची समाप्ता ।

पृ. पा. व्यासवाक्यावसानेतुमुनिमुख्यःपराशरः ॥ सुखासीनोमहातेजाइदंवचनमब्रवीत् ॥ १९ ॥ क्रियंतेनैववेदाश्चनचापिप्रभवंतिते ॥ नक
॥ १ ॥ श्चिद्वेदकर्तास्तिवेदस्मर्ताचतुर्मुखः ॥ २० ॥ तथास्मरंतितेधर्मकल्पेकल्पांतरांतरे ॥ अन्येकृतयुगेधर्मास्त्रेतायांद्वापरेऽपरे ॥ अन्येक अ०
लियुगेनृणांयुगह्रासानुरूपतः ॥ २१ ॥ तपःपरंकृतयुगेत्रेतायांज्ञानमुत्तमम् ॥ द्वापरेयज्ञमेवाहुर्दानमेवकलौयुगे ॥ २२ ॥ कृ १
तेतुमानवाधर्मास्त्रेतायांगौतमस्यच ॥ द्वापरेशंखलिखिताः कलौपाराशराःस्मृताः ॥ २३ ॥ त्यजेद्देशंकृतयुगेत्रेतायांग्राममुत्सृजेत् ॥
द्वापरेकुलमेकंतुकर्तारंचकलौयुगे ॥ २४ ॥ कृतेतुलिप्यतेदेशस्त्रेतायांग्रामएवच ॥ द्वापरेकुलमेकंतुकर्तैककर्तारंविलिप्यते ॥ २५ ॥
कृतेपततिसंभाष्यत्रेतायांस्पर्शनेनतु ॥ द्वापरेभक्षणेनान्नस्यकलौपततिकर्मणा ॥ २६ ॥ अभिगम्यकृतेदानंत्रेतायांसाभिमंत्रणम् ॥
द्वापरेयाच्यमानंतुकलौदीयेतसेवया ॥ २७ ॥ अभिगम्योत्तमंदानंमध्यमंसाभिमंत्रणम् ॥ अधमंयाच्यमानंस्यात्सेवादानंतुनिष्फ
लम् ॥ २८ ॥ कृतेधातुगताःप्राणास्त्रेतायांमांससंश्रिताः ॥ द्वापरेरुधिरंयावत्कलावन्नानिषेविणः ॥ २९ ॥ कृतेतत्क्षणिकःशापस्त्रेतायां
दशभिर्दिनैः ॥ मासेनद्वापरेज्ञेयः कलौसंवत्सरेणतु ॥ ३० ॥ युगेयुगेतुयेधर्मास्तेषुधर्मेषुयेद्विजाः ॥ तेषांनिंदानकर्तव्यायुगरूपाद्विजो
त्तमाः ॥ ३१ ॥ धर्मःसत्यंचसाधुश्चतुर्यांशेनकलौस्थितः ॥ अदानात्तदनाद्यत्वंतुच्छमायुरकार्यतः ॥ ३२ ॥ धर्मश्चलोकदंभार्थंपाखंडार्थंतपस्वि
ता ॥ विविधावाग्धनार्थंस्यात्कलौसत्यानुकारिणी ॥ ३३ ॥ अल्पक्षीरास्तथागावः स्वल्पसस्याचमेदिनी ॥ स्त्रीजनन्यः स्त्रियः सर्वाः
सुखार्थंकृतमैथुनाः ॥ ३४ ॥ पुरुषानिर्जिताः स्त्रीभिर्भूपाःम्लादस्युभिर्जिताः ॥ जितोधर्मश्चपापेनसत्यंचावितथैर्जितम् ॥ ३५ ॥ शूद्राश्च ॥ १ ॥
ब्राह्मणाचाराः शूद्राचारास्तथाद्विजाः ॥ अंत्यानुयायिनश्चाद्यावर्णास्तदुपजीविनः ॥ ३६ ॥ कृतंतुब्राह्मणयुगंत्रेतातुक्षत्रियंस्मृतम् ॥

वैश्यंतुद्वापरयुगंकलिः शूद्रयुगंस्मृतम् ॥ ३७ ॥ चातुर्वर्णिकनारीणांतथातुरीयजन्मनाम् ॥ पतिद्विजात्युपास्त्यापिधर्मोर्धिमहतीकलौ ॥
॥ ३८ ॥ कृतेयत्कोटिदस्यस्यात्रेतायांलक्षदस्यतत् ॥ द्वापरेऽयुतदस्यस्याच्छतदस्यकलौफलम् ॥ ३९ ॥ युगस्वरूपंसमाख्यातमन्य
च्चगदतःशृणु ॥ वर्णानामाश्रमाणांचसर्वेषांधर्मसाधनम् ॥ ४० ॥ कृष्णोमृगश्चरेद्यत्रस्वंभावेनमहीतले ॥ वसेत्तत्रद्विजातिस्तुशूद्रोय
त्रतुतत्रतु ॥ ४१ ॥ हिमपर्वतविंध्याद्योर्विनशनप्रयागयोः ॥ मध्येतुपावनोदेशोम्लेच्छदेशस्ततः परः ॥ ४२ ॥ देशेष्वन्येषुयानद्यो
धन्याः सागरगाः शुभाः ॥ तीर्थानियानिपुण्यानिमुनिभिः सेवितानिच ॥ ४३ ॥ वसेयुस्तदुपांतेषुशमिच्छंतोद्विजमतयः ॥ मुनिभिः
सेवितत्वेनपुण्यदेशः प्रकीर्तितः ॥ ४४ ॥ यत्रपानमपेयस्यदेशेऽभक्षस्यभक्षणम् ॥ अगम्यागमनंयत्रतंदेशंपरिवर्जयेत् ॥ ४५ ॥ एवं
देशःसमाख्यातोयाज्ञिकोहिद्विजन्मनाम् ॥ एवमेवानुवर्त्तेरन्देशंधर्मानुकांक्षिणः ॥ ४६ ॥ उषित्वाप्यत्रतत्रापिस्वाचारंनविवर्जयेत् ॥
षट्कर्माणिप्रकुर्वीरन्निति धर्मस्यनिश्चयः ॥ ४७ ॥ पराशरश्चयत्प्राहशास्त्रंस्वसुतवत्सलः ॥ अथतत्संप्रवक्ष्यामिद्विजकर्मादिकंद्विजाः ॥
॥ ४८ ॥ षट्कर्मवर्णधर्माश्चप्रशंसागोवृषस्यच ॥ अदोह्यवाह्यौयौतौतुसीरंसीरप्रयोगिणम् ॥ ४९ ॥ अमावास्यानिषिद्धानितपंश्चपशु
पालनम् ॥ अन्नतोयप्रशंसाचवाह्यावाह्यावसुंधरा ॥ ५० ॥ अयथार्थकृपोपापंतदघस्यापिशोधनम् ॥ बलिस्तीतामेखस्यापिविवाहाः
कन्यकावराः ॥ ५१ ॥ स्त्रीपुंधर्मामखाःपंचाद्विजातिस्वर्गसाधनाः ॥ विधिः प्राणाग्निहोत्रस्यनिषेकादिकसंस्थितिः ॥ ५२ ॥
व्रतचर्याचतद्धर्मःप्रशंसापुत्रजन्मनः ॥ कृत्स्नोगृहस्थधर्मश्चभक्ष्याभक्ष्यंतथैवच ॥ ५३ ॥ निषिद्धंवस्तुकथनंपात्रशुद्धिस्ततः
परम् ॥ द्रव्याणांचतथाशुद्धिरूपाकर्मादिकर्मच ॥ ५४ ॥ अनध्यायास्तथाश्राद्धंविप्रकालहविर्युतम् ॥ बलिर्नारायणी

बृ. पा. यश्चस्नातकाशौचमेवच ॥ ५५ ॥ परिषत्प्रायाश्चित्तानितद्व्रतानिद्विजोत्तमाः ॥ विधिवत्सर्वदानानितेषांचैवफलानिच अ०
॥ ५६ ॥ भूमिदानप्रशंसाचविशेषोविप्रकन्ययोः ॥ इष्टापूर्ततथाविद्वंस्तयोर्भिन्नंफलानिच ॥ ५७ ॥ प्रतिग्रहविधिस्तत्रयथायस्यप्रति
॥ २ ॥ ग्रहः ॥ विनायकादिशांतीनांविधयोथद्विजोत्तमाः ॥ ५८ ॥ वानप्रस्थस्यधर्मोथंतथाधर्मोयतेरपि ॥ चतुराश्रमभेदोपिवपुर्निंदातथैवच ॥ २
॥ ५९ ॥ योगोर्चिर्धूममार्गौचकालंभद्रान्नमेवच ॥ दिष्टार्तातंपरंध्येयंसर्वमतत्पराशरः ॥ ६० ॥ प्रोक्तवान्व्यासमुख्यस्माशेषंमुनिविभा
वितम् ॥ नियुक्तः सुव्रतः शेषख्यापनायद्विजन्मनाम् ॥ ६१ ॥ पराशरोव्यासवचोऽवगम्ययदाहशास्त्रंचतुराश्रमार्थम् ॥ युगानुरूपंच
समस्तवर्णहितायवक्ष्यत्यथसुव्रतस्तत् ॥ ६२ ॥ शक्तिमूनोरनुज्ञातः सुतपाः सुव्रतस्त्विदम् ॥ चतुर्णामाश्रमाणांचहितंशास्त्रमथाब्रवीत् ॥ ६३ ॥
इतिबृहत्पाराशरीयेधर्मशास्त्रेव्यासप्रश्नेसुव्रतप्रोक्तसंहितायांशास्त्रसंग्रहोद्देशकथनंनामप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥
पराशरमतंपुण्यंपवित्रंपापनाशनम् ॥ विहितंब्राह्मणार्थायधर्मसंस्थापनायच ॥ १ ॥ चतुर्णामपिवर्णानामाचारोधर्मपालनम् ॥ आचा
रहीनदेहानांभवेद्धर्मःपराङ्मुखः ॥ २ ॥ षट्कर्माभिरतोनित्यंदेवतातिथिपूजकः ॥ हुतशेषंतुभुंजानोब्राह्मणोनावसीदति ॥ ३ ॥ कर्मा
णिकानीहकथंचतानिकार्याणिवर्णैश्चकिमाद्यकानि ॥ तेषामनीहाकरणेविधिश्चसर्वंप्रसादात्प्रतनुष्वमह्यम् ॥ ४ ॥ तत्षट्कर्मप्रवक्ष्यामि
यत्कुर्वंतोद्विजातयः ॥ गृहस्थाअपिमुच्यंतेसंसारैर्दृढबंधनैः ॥ ५ ॥ अथोद्देशकर्मशास्त्रंयच्छ्रुतंश्रुतिदृष्टिकृत ॥ तदुक्तकर्मकृत्पुंसांशृणु
ध्वंपापनाशनम् ॥ ६ ॥ संध्यास्नानंजपश्चैवदेवतानांचपूजनम् ॥ वैश्वदेवंतथातिथ्यंषट्कर्माणिदिनेदिने ॥ ७ ॥ अथसंध्यांप्रवक्ष्यामिदे ॥ २ ॥
वताकालनामभिः ॥ वर्णर्षिच्छंदसायुक्तांयद्विधांचयथोचिताम् ॥ ८ ॥ यावन्मंत्रंयथोपास्तिरुपस्पर्शनमेवच ॥ आवाहनंविसर्गंचयावन्मात्रं

क्रमेणतु ॥ ९ ॥ दिवसस्यचरात्रेश्चसंधिः संध्येतिगीयते ॥ सोपांस्यासाद्विजैर्यत्नात्स्यात्तैर्विश्वमुपासितम् ॥ १० ॥ मध्याह्नेपिचसंधिः स्यात्पूर्वस्याह्नोऽपरस्यच ॥ पूर्वाह्नाहोऽपराह्नश्चक्षपाचेतिश्रुतिक्रमः ॥ ११ ॥ पूर्वासंध्यातुगायत्रीब्रह्माणीहंसवाहना ॥ रक्तपद्मारुणा देवीरक्तपद्मासनास्थिता ॥ १२ ॥ रक्ताभरणरक्तांगीरक्तमाल्यांबरातथा ॥ अक्षमालास्रग्धराचवरहस्तामरार्चिता ॥ १३ ॥ प्रातःसंध्यां सनक्षत्रांमुपासीतयथाविधि ॥ सादित्यांपश्चिमांसंध्यामर्धास्तमितभास्कराम् ॥ १४ ॥ प्रागादित्योदयाद्विद्वान्मुहूर्तेवैधसेसति ॥ उत्तिष्ठ योपासयेत्संध्यांयावत्स्यादर्कदर्शनम् ॥ १५ ॥ विश्वमातः सुराभ्यर्च्येपुण्येगायत्रिवेधसि ॥ आवाहयाम्युपास्त्यर्थमेह्येनोघ्निपुनीहिमाम् ॥ ॥ १६ ॥ संध्याप्राध्याह्निकीश्वेतासावित्रीशंभुदेवता ॥ वृषेंद्रवाहनादेवीज्वलत्त्रिशिखधारिणी ॥ १७ ॥ श्वेतांबरधराश्वेतानानाभरणभूषिता ॥ श्वेतस्रगक्षमालाचकृतानुरक्तिशंकरा ॥ १८ ॥ जलाधारधराधात्रीधरेंद्रादिभवात्तथा ॥ स्वभावभूरिभूषाढ्यास्वरात्रामुत्तमाद्वया ॥ १९ ॥ मातर्भवानिविश्वेशेविश्वविश्वजनार्चिते ॥ शुभवरवरेण्येहिआहूतेहिपुनीहिमाम् ॥ २० ॥ संध्यासायंतनीकृष्णाविष्णुदेवीसरस्वती ॥ खगगाकृष्णवस्त्राचशंखचक्रगदाधरा ॥ २१ ॥ कृष्णस्रग्भूषणैर्युक्तासर्वज्ञानमयीचसा ॥ सर्वशाग्देवतासर्वाब्रह्मादिवक्त्रसंस्थिता ॥ २२ ॥ वीणाक्षमालिकावारहस्तास्मितवरानना ॥ चतुर्दशजनाभ्यर्च्याकल्याणीशुभवाक्प्रदा ॥ २३ ॥ स्मृतवाग्देविवरदेवरेण्येवचनप्रदे ॥ सर्वामरगणस्तुत्येआहूतेहिपुनीहिमाम् ॥ २४ ॥ ब्रह्मशार्कहरीणांतुसंगमस्तूभयोर्भवेत् ॥ माध्याह्निकायांसंध्यायां सर्वेदेवाःसमागताः॥२५॥पूजाभिकांक्षिणोयेचयेचकेचिज्जलार्थिनः ॥ श्राद्धान्नभागधेयायेयेचाग्निहुतभागिनः ॥ २६ ॥ अन्यान्युच्चावचाभीहस्थावराणिचराणिच ॥ माध्यांह्निकोमपेक्षंतेतेषामाप्यायनीहिसा ॥ २७ ॥ यस्तस्यांनार्चयेद्देवास्तर्पयेन्नपितृंस्तथा ॥ भूतान्युच्चावचा

नीहसोंधतांक्षिस्त्रमृच्छति॥ २८ ॥ईशान्यभिमुखोभूत्वाद्विजः पूर्वमुखोपिवा ॥ संध्यामुपासयेद्यद्वत्तथावत्समिबोधतत्॥ २९ ॥हस्तौचमणि
बंधान्तंपादौवाजानुतः शुची ॥ प्रक्षाल्याचामयेद्विद्वानंतर्जानुकरोद्विजः ॥ ३० ॥ निर्मलाफेनपूताभिर्मनोज्ञाभिःप्रयत्नवान् ॥ आप्वा
मेद्ब्रह्मतीर्थेनपुनराचमनाच्छुचिः ॥ ३१ ॥ मुखनिर्मार्जनंकृत्वाद्विस्तेनैवापराण्यपि ॥ अद्भिश्चसंस्पृशेत्खानिसर्वाण्यपिविशुद्धये ॥ ३२ ॥
अंगुष्ठेनप्रदेशिन्यासव्यपाणिस्थवारिणा ॥ घ्राणंसंस्पृश्यनेत्रेचततोनामिकयाश्रुती ॥ ३३ ॥ नाभिंचतत्कनिष्ठाभ्यांवक्षःकरतलेनच ॥
शिरःसर्वाभिरंसौचअंगुल्यग्रैस्तुसंस्पृशेत् ॥ ३४ ॥ आचम्यप्राणसंरोधंकृत्वाचोपस्पृशेत्पुनः ॥ अत्रोपस्पर्शनेमंत्रंप्रातःकेचित्पठंतिहि॥
॥ ३५ ॥ सूर्यश्चमेतिमंत्रेणप्रातराचमनंस्मृतम् ॥ आपःपुनंतुमध्याह्नेसायमग्निश्चमेतिच ॥ ३६ ॥ मंत्राभिमंत्रितंकृत्वाकुशपूतंतथा
जलम् ॥ आचाम्यविधिवद्धीमान्संध्योपासनमाचरेत् ॥ ३७ ॥ सोंकारांचैवगायत्रींजप्त्वाव्याहृतिपूर्विकाम् ॥ आपोहिष्ठादिजल्पंति
देवतार्षिपूर्वकम् ॥ ३८ ॥ छंदोभिर्विनियोगैश्चमंत्रब्राह्मणसंयुतम् ॥ एतद्धीनंनकुर्वीतकुर्याच्चेत्स्यात्तदासुरम् ॥ ३९ ॥ मृत्युभीतैः
पुरादेवैरात्मनश्छादनायच ॥ छंदांसिसंस्मृतानीहछादितास्तैस्ततोमराः ॥ ४० ॥ छादनाच्छंदउद्दिष्टंवाससीवाथवाकृते ॥ छंदो
भिराकृतंसर्वंविद्यात्सर्वत्रनान्यतः ॥ ४१ ॥ यस्मिन्मंत्रेचयोदेवस्तेनदेवनचिह्नितम् ॥ मंत्रं तद्दैवतंविद्यात्सोतितत्रतुदेवता ॥ ४२ ॥
येनयद्दृषिणादृष्टंसिद्धिःप्राप्तातुयेनवै ॥ मंत्रेणतस्यसप्रोक्तोमुनेर्भावस्तदात्मकः ॥ ४३ ॥ यत्रकर्मणिचारब्धेजपहोमार्चनादिकम् ॥
क्रियतेयेनमंत्रेणविनियोगस्तस्यसंस्मृतः ॥ ४४ ॥ अस्यमंत्रस्यचार्थोयमयंमंत्रोऽत्रवर्तते ॥ तत्तस्यब्राह्मणंज्ञेयंमंत्रस्येतिश्रुतिक्रमः ॥
॥ ४५ ॥ एतद्धिपंचकंज्ञात्वाक्रियतेकर्मयद्द्विजैः ॥ तदनंतफलंतेषांभवेद्वेदनिदर्शनात् ॥ ४६ ॥ एकांशेनापियन्न्यूनंकुर्यात्कर्मद्विजो

त्तमः ॥ तेनासौहन्यतेकर्तामृतोगर्तंसमृच्छति ॥ ४७ ॥ कुर्वन्नज्ञोद्विजःकर्मजपहोमादिकिंचन ॥ नासौतस्यफलंविंदेत्क्लेशमात्रंहित
स्यतत् ॥ ४८ ॥ आपद्यतेस्थाणुगर्तंस्वयंवापिप्रलीयते ॥ यातयामानिच्छंदांसिभवंतिफलदान्यपि ॥ ४९ ॥ सिंधुर्द्वीपार्षश्छंदोवै
गायत्रंमृक्षुनिसृषु ॥ आपोहिदैवतंप्राहुरापोहिष्ठादिषुद्विजाः ॥ ५० ॥ कोकिलोराजपुत्रस्तुद्रुपदाद्यार्षमुच्यते ॥ आनुष्टुभंभवेच्छंदआप
श्चैवतुदैवतम् ॥ ५१ ॥ अघमर्षणमृक्तस्यऋषिरेवाघमर्षणम् ॥ छंदोस्यानुष्टुभंप्राहुरापश्चैवतुदैवतम् ॥ ५२ ॥ सौत्रामण्यावभृथकेवि
नियोगोस्यकल्पितः ॥ उदुत्यमितिप्रस्कण्वोगायत्रंसूर्यदेवता ॥ ५३ ॥ चित्रमित्यस्यकुत्सस्तुशक्करीसूर्यदेवता ॥ प्रणवोभूर्भुवःस्व
श्चगायत्र्यापोहृचांत्रयम् ॥ ५४ ॥ द्रुपदाघमर्षणंमृक्तंमार्जनंव्याहरेद्दिने ॥ स्मृतिभिःपरिशिष्टैश्चविशेषस्तोयसेचने ॥ ५५ ॥ उक्तोधो
र्ध्वविभागेनकर्तव्यःसोपिसद्विजैः ॥ आपोहिष्ठेतिचऋचामष्टाक्षरपदेनच ॥ ५६ ॥ पदांतेनुक्षिपेद्वारिपदमध्येतुनक्षिपेत् ॥ भूमौमूर्ध्नि
तथाकाशेमूर्ध्न्याकाशेपुनर्भुवि ॥ ५७ ॥ एवंवारिद्विजःसिंचन्स्तर्पयेत्सर्वदेवताः ॥ ऋगंतेमार्जनंकुर्यात्पदांतेवासमाहितः ॥ ५८ ॥ ऋगर्धंवाप्र
कुर्वीतशिष्टानांमतमीदृशम् ॥ उदुत्यंचित्रंदेवानामुपस्थानेनियोजयेत् ॥ ५९ ॥ हंसःशुचिषदित्यादिकेचिदिच्छंतिसूरयः ॥ अव्याहृत
मिदंह्यासीत्सदेवासुरमानुषम् ॥ संक्षेपेणासृजद्ब्रह्मासतेमाव्याहृतीःपुरा ॥ ६० ॥ भूर्भुवःस्वर्महर्जनस्तपःसत्यंतथैवच ॥ आद्यास्तिस्रोम
हाप्रोक्तास्तासांसर्वत्रयोजना ॥ ६१ ॥ अग्निर्वायुस्तथादित्योबृहस्पत्यापएवच ॥ इंद्रश्चविश्वेदेवाश्चदेवताःसमुदाहृताः ॥ ६२ ॥ गायत्र्युं
ष्णिगनुष्टुप्चबृहतीपंक्तिरेवच ॥ त्रिष्टुप्चजगतीचैवच्छंदांस्येतान्यनुक्रमात् ॥ ६३ ॥ भरद्वाजःकश्यपश्चगौतमोत्रिस्तथैवच ॥ विश्वामित्रोजम
दग्निर्वसिष्ठऋषयःक्रमात् ॥ ६४ ॥ एताभिःसकलंव्याप्तमेताभ्योनास्तिचापरम् ॥ संतितेस्वर्गलोकावसत्याद्दूर्ध्वंनविद्यते ॥ ६५ ॥ तस्माँल्लोका

त्परामुक्तिरर्वाचीनादपेक्षया ॥ प्राणसंयमनेष्वेताअभ्यस्ताःपूरकादिभिः ॥ ६६ ॥ ओमापोज्योतिरित्येतच्छिरःपश्चात्प्रयुज्यते ॥ प्रत्यों
कारसमायुक्तोमंत्रोयंतैत्तिरीयके ॥ ६७ ॥ अत्रोंकारवदार्षादि विदुर्ब्रह्मविदोजनाः ॥ प्रणवाद्यन्तगायत्रीप्राणायामेष्वयंविधिः ॥ ६८ ॥
गायत्र्यादिकमित्रांतमंत्रैश्चप्रागुदीरितैः ॥ उपासीरन्द्विजास्तावद्यावच्चोदेतिभास्करः ॥ ६९ ॥ गवांवालपवित्रेणयेतुसंध्यामुपासते ॥ स
र्वतीर्थाभिषेकंतु लभंतेनात्रसंशयः ॥ ७० ॥ गोवालंदर्भसारंचखड्गंकनकमेवच ॥ दर्भाताम्रतिलैर्वापिएभिस्तर्पणकृद्द्विजः ॥ ७१ ॥
ससंतर्प्यपितॄन्देवानात्मानंत्रिदिवंनयेत् ॥ त्रिंशत्कोट्यस्तुविख्यातामंदेहानामराक्षसाः ॥ ७२ ॥ उद्यंतंतेविवस्वंतंबलादिच्छंतिखादि
तुम् ॥ दिनेदिनेसहस्रांशुरलक्ष्यैस्तैरभिद्रुतः ॥ भानुर्हीनःकृतोनित्यंतद्दृश्यत्वमिवागतः ॥ ७३ ॥ अतस्तस्यचतेषांचभवेद्युद्धंसुदारु
णम् ॥ किंभविष्यतियुद्धेस्मिन्नित्यभूत्सुरविस्मयः ॥ ७४ ॥ अरुणस्यचयेवाणाज्वलंतोयेचभास्वतः ॥ विलक्ष्यास्तेनिवर्तंतेमंदेहानाम
दर्शनात् ॥ ७५ ॥ रवेरप्यंशवोयस्माद्यतीयाताह्यशक्तितः ॥ अप्राप्ताश्चशरीराणिस्वामिन्येवलयंगताः ॥ ७६ ॥ हेषाशब्दमकुर्वाणाः
शफस्फुरणवर्जिताः ॥ शुष्कांगानिर्जवाजाताः सूर्यस्यंदनवाजिनः ॥ ७७ ॥ ततोदेवगणाःसर्वेमुनयश्चतपोधनाः ॥ तेसंध्यांयदुपासंतः
क्षिपंतितज्जलेमहत् ॥ ७८ ॥ ओंकारब्रह्मसंयुक्तंगायत्र्याचाभिमंत्रितम् ॥ दह्यंतेतेनतेदैत्यावज्रीभूतेनवारिणा ॥ ७९ ॥ सहस्रांशोरथेति
ष्ठन्योधीयायचतुःश्रुतीः ॥ याज्ञवल्क्यः समीक्ष्यैताच्चिह्नशाप्रोक्तवांस्ततः ॥ ८० ॥ मन्येत्यनुदितादित्येसंध्योपास्तिकरोभवेत् ॥ उदि
तेसतियासंध्यावालक्रीडोपमाहिसा ॥ ८१ ॥ संध्यायेननविज्ञातानचसंध्याउपासित ॥ सजीवन्नपिशूद्रःस्यात्सदापातकसंयुतः ॥ ८२ ॥
मंत्रंपार्थिवमाग्नेयंवायव्यंदिव्यमेवच ॥ वारुणंमानसंचेतिसप्तस्नानान्यनुक्रमात् ॥ ८३ ॥ शंन्नआपस्तुवैमांत्रंमृदालंभंतुपार्थिवम् ॥ भस्म ॥ ५ ॥

नास्नानमाग्नेयंगवांरेणुभिरानिलम् ॥८४॥ आतपेसतियावृष्टिस्तद्दिव्यंस्नानमुच्यते ॥ बहिर्नद्यादिकेस्नानंवारुणंतत्प्रकीर्तितम् ॥ ८५ ॥
यद्ध्यानंमनसाविष्णोर्मानसंकथ्यतेबुधैः ॥ असामर्थ्येनुकायस्यकालशक्त्याद्यपेक्षया ॥ ८६ ॥ सर्वाणिफलतुल्यानिस्युरित्याहपरा
शरः ॥ स्नानानांमानसंस्नानंमन्वाद्यैःपरमंस्मृतम् ॥ ८७ ॥ कृतेनयेनमुच्यंतेगृहस्थाअपिसद्द्विजाः ॥ नित्यादीनांत्रयाणांतुस्नानानामौ
षसंपरम् ॥ ८८ ॥ उषस्युषसियत्स्नानंक्रियतेनुदितेरवौ ॥ प्राजापत्येनतत्तुल्यंमहापातकनाशनम् ॥ ८९ ॥ प्रातरुत्थाययोविप्रः प्रातः
स्नायीसदाभवेत् ॥ सर्वपापविनिर्मुक्तःपरंब्रह्माधिगच्छति ॥ ९० ॥ अस्नात्वानाचरेत्कर्मजपहोमादिकिंचन ॥ क्लिद्यंतेहिसुगुप्तानिइं
द्रियाणिक्षरंतिच ॥ ९१ ॥ अंगानिसमतांयांतिउत्तमान्यधमैः सह ॥ अत्यंतमलिनःकायोनवच्छिद्रसमन्वितः ॥ ९२ ॥ स्रवत्येषदिवा
रात्रौप्रातःस्नानंविशोधनम् ॥ उषःस्नानंप्रशंसंतिसर्वेपिपितरोनराः ॥ ९३ ॥ दृष्टादृष्टकरंपुण्यंशंसंतिमुनयोपिहि ॥ प्रातःस्नातिहियोवि
प्रःसोर्हःस्यात्सर्वकर्मसु ॥ प्राप्नोतितत्कृतंपुण्यंसर्वंचस्याद्यथार्थवत् ॥ ९४ ॥ अविद्वान्स्नानकालेतुयःकुर्याद्दंतधावनम् ॥ पापीया
न्रौरवेयातिपितृशापहतोद्विजः ॥ ९५ ॥ यच्चश्मश्रुषुकेशेषु यज्जलं देहरोमसु ॥ नहस्ताभ्यांनवस्त्रेणजलंविद्वान्प्रमार्जयेत् ॥
॥ ९६ ॥ मार्जितेपितरस्तोयेसर्वाअपिहिदेवताः ॥ तथासर्वेमनुष्याश्चत्यजंत्यन्नायतंद्विजम् ॥ ९७ ॥ स्नातुःसेवन्तितत्सर्वे
तीर्थेपितृदिवौकसः ॥ ततोऽन्यद्यद्यसौगच्छेन्निराशास्तेशपन्तिहि ॥ ९८ ॥ यातुःस्नानार्थिनस्तीर्थंचिन्तिततंजलाशयम् ॥
तद्देहमुपतिष्ठन्तितृप्तयेपितृदेवताः ॥ ९९ ॥ अतोनचिन्तयेत्तीर्थंव्रजेदेवतुचिन्तितम् ॥ देवखातनदीस्रोतःसरःसुस्नानमाच
रेत् ॥ १०० ॥ स्नानंनद्यादिबद्धेषुतद्भिःकार्यंसदम्बुषु ॥ कृत्रिमंतोयबन्धत्वंतोयंतत्रचकृत्रिमम् ॥ १ ॥ नतीर्थेछायाकुले

स्नायान्नासज्जनसमाकुले ॥ दर्भहीनोन्यचित्तश्चनग्नोनशिरोविना ॥ २ ॥ कदाचिद्विदुषामत्यानस्नातव्यंपरांभसा ॥ अम्बुकृद्दुष्कृतां
शेनस्नानकर्ताविलिप्यते ॥ ३ ॥ सप्तवाम्पश्चवापिंडान्म्न्यायादुद्धृत्यतत्रतु ॥ वृथास्नानादिकानीहविशेषेणविवर्जयेत् ॥ ४ ॥ वृथैवो
ष्णोदकस्नानंवृथाजाप्यमवैदिकम् ॥ अश्रोत्रियेवृथादानं वृथाभुक्तमसाक्षिकम् ॥ ५ ॥ मासेनभासिनस्नायात्कदाचिन्निम्नगासुच ॥
रजस्वलाभवन्त्येतावर्जयित्वासमुद्रगाः ॥ ६ ॥ नापोमूत्रपुरीपाभ्यांनाग्निर्दहनकर्मणा ॥ नस्त्रीदुष्यतिजारेणब्राह्मणोवेदकर्मणा ॥ ७ ॥
नस्नायात्क्षुभितास्वप्सुनस्वयंक्षोभयेच्चवाः ॥ ननिर्गतासुतीर्थाच्चपतन्तीष्वाहतासुच ॥ ८ ॥ रविसंक्रांतिचारेषुग्रहणेचशशिक्षये ॥
व्रतेषुचैवपष्ठीषुनस्नायादुष्णवारिणा ॥ ९ ॥ नस्नायाच्छूद्रहस्तेननैकहस्तेनवापुनः ॥ उद्धृताभिरपिस्नायाद्दाहृताभिर्द्विजातिभिः ॥
॥ ११० ॥ स्वभावाभिरनुष्णाभिःसहेमाभिःस्तथाद्विजाः ॥ नवाभिर्निर्दशाहाभिरसंस्पृष्टाभिरन्त्यजैः ॥ ११ ॥ यःस्नानमाचरेन्नित्यंतं
प्रशंसंतिदेवताः ॥ तस्माद्बहुगुणंस्नानंसदाकार्यंद्विजातिभिः ॥ १२ ॥ उत्साहाप्यायनंस्वान्तप्रसत्तिशक्तिवृद्धिकम् ॥ कीर्तिकान्तिवपुः
पुष्टिसौभाग्यायुःप्रवर्धनम् ॥ १३ ॥ स्वर्ग्यंचदशभिर्युक्तंगुणैःस्नानंप्रशस्यते ॥ सूर्यादिदिनवारेषुतैलाभ्यञ्जनपूर्वकम् ॥ १४ ॥
हृत्तापकीर्तिमरणसुतस्थानांतिमृत्यवः ॥ आयुरर्कादिवारेषुतैलाभ्यंगेफलंक्रमात् ॥ १५ ॥ जलावगाहनंस्नानं नित्यंसर्वेषुवर्णिषु ॥
शक्तैरहरहःकार्यंतस्याथविधिरुच्यते ॥ १६ ॥ गोशकृन्मृत्कुशांश्चैवपुष्पाणिपत्रिकांतथा ॥ स्नानार्थीप्रयतोनित्यंस्नानकालेसमाह
रेत् ॥ १७ ॥ स्वमनोभिमतंतीर्थंगत्वाप्रक्षाल्यपद्द्वयम् ॥ हस्तौचाचम्यविधिवच्छिखांबद्धैकचेतसा ॥ १८ ॥ मृदंबुभिःस्वगात्राणि
क्रमात्प्रक्षालयेदथ ॥ पादौजंघेकटिंचैवक्रमात्प्रागंबुभिस्त्रिभिः ॥ १९ ॥ प्रक्षाल्यहस्तावाचम्यनमस्कृत्यचतज्जलम् ॥ गुह्यापगुह्य

इत्येतद्यजुषाप्रयताञ्जलिः ॥ १२० ॥ उरुंहीतिचमंत्रेणकुर्यादापोभिमंत्रणम् ॥ विधिज्ञाःकवयःकेचिन्मंत्रतत्त्वार्थवेदिनः ॥ २१ ॥ यत्रस्था
नेषुयत्तीर्थंनदीपुण्यतमातथा ॥ गङ्गादिपुण्यतीर्थानिकृत्रिमादिषुसंस्मरेत् ॥ २२ ॥ तद्ध्यायेन्मनसावापितीर्थमन्यन्नचिंन्तयेत् ॥
महाव्याहृतिभिःपश्चादाचमेत्प्रयतोपिसन् ॥ २३ ॥ उदुत्तममितिह्यप्सुमंत्रेणप्राङ्मुखोविशेत् ॥ येअग्नयोदिवीत्येतत्कुर्यादालंभनं
ततः ॥ २४ ॥ सूर्यंपश्यञ्जलंमुक्त्वासमुत्तीर्यंचसुस्थलम् ॥ आचम्याथाहरेन्मृत्स्नांतथाकार्यंसमालभेत् ॥ २५ ॥ अश्वक्रांतेरथक्रां
तेविष्णुक्रांतेवसुंधरे ॥ मृत्तिकेहरमेपापंयन्मयापूर्वसंचितम् ॥ २६ ॥ मृत्तिकाहरणेमंत्रमितिवासिष्ठजोब्रवीत् ॥ सुमालभेत्रिभिर्मंत्रैरिदं
विष्णुरादिभिर्द्विजः ॥ २७ ॥ शिरश्चांसावुरश्चोरूपादौजंघेक्रमेणतु ॥ भास्कराभिमुखोमज्जेदापोअस्मानितित्रिभिः ॥ २८ ॥ उन्मृज्य
सर्वगात्राणिनिमज्जेच्चपुनःपुनः ॥ उत्तीर्याचम्यगात्राणिगोमयेनोपलेपयेत् ॥ २९ ॥ मानस्तोकइतिह्युक्त्वाप्राग्वोदङ्मांक्रमेणतु ॥ इमं
मेवरुणतत्वन्नःसत्वन्नोमायदुत्तमम् ॥ मुञ्चंत्ववभृथेत्येतैरात्मानमभिषेचयेत् ॥ १३० ॥ निमज्ज्याचम्यचात्मानंदर्भैर्मंत्रैश्चपावयेत् ॥ सर्वपा
पापनोदार्थंप्राग्वदंगक्रमेणतु ॥ ३१ ॥ आपोहिष्ठादिकैर्मंत्रैस्त्रिभिरन्यैश्चपावयेत् ॥ हविष्मतीरिमाआपइदमापस्तथैवच ॥ ३२ ॥ देवी
रापइतिद्वाभ्यामापोदेवीइतित्र्यृचम् ॥ संस्मृत्यद्रुपदादेवीशंनोदेवीरपांरसम् ॥ ३३ ॥ प्रत्येकंमंत्रनवकमपोदेव्यःपुनंतुमाम् ॥ चित्प
तिर्मापुनात्वेतन्मंत्रेणापिचपावयेत् ॥ ३४ ॥ हिरण्यवर्णाइतिचपावमान्यस्तथापरे ॥ तरत्समंदीधावतिपवित्राण्यान्सर्वतः ॥ ३५ ॥ स्नान
कर्मात्मकैर्मंत्रैरन्यैरप्यंबुदेवतैः ॥ प्लाव्यात्मानंनिमज्ज्याथआचांतस्त्वन्यदाचरेत् ॥ ३६ ॥ कालकायप्रदेशानांतथाचैवोदकस्यच ॥ प्राक्
त्येसतिचैवायंविधिरन्योविपर्यये ॥ ३७ ॥ सोंकारांचैवगायत्रींमहाव्याहृतिभिःसह ॥ त्रिषण्णवैकधावृत्यास्नातिविद्वानपिद्विजः ॥ ३८ ॥

छंदोमुन्यपरैर्युक्तंस्वशाखा स्वरसंयुतम् ॥ आवर्त्यप्रणवंस्नायाच्छतशोर्धशतंदश ॥ ३९ ॥ चिद्रूपंपरमंज्योतिर्निरालंबमनामयम् ॥
अव्यक्तमव्ययंशांतंस्नायाद्वापिहरिंस्मरन् ॥ १४० ॥ गायत्रीवारिसंस्नातःप्रणवैर्निर्मलीकृतः ॥ विष्णुस्मरणसंशुद्धोयोग्यः सर्वेषुक
र्मसु ॥ ४१ ॥ योधीतवेदवेदार्थःस्नातःसर्वेषुवारिषु ॥ न शुद्ध्येदशुचिस्वांतस्तच्छुद्धस्तुशुचिर्यतः ॥ ४२ ॥ मंत्रैश्चमनसास्नानंनगो
मयमृदंम्बुभिः ॥ तैर्हीनाःस्वरमत्स्याश्चस्नानात्फलमवाप्नुयुः ॥ ४३ ॥ भावपूतःपवित्रःस्यान्मंत्रपूतस्तथानरः ॥ उभयेनपवित्रस्तुनि
त्यस्नायीशुचिर्नरः ॥ ४४ ॥ विधिदृष्टंतुयत्कर्मकरोत्यविधिनातुयः ॥ नकिंचित्फलमाप्नोतिक्लेशमात्रंहितस्यतत् ॥ ४५ ॥ उत्पद्यं
तेजलेमत्स्याविपद्यंतेतुतत्रच ॥ तिष्ठंतोपिनतेस्नानफलंनैवाप्नुयुर्मृताः ॥ ४६ ॥ विधिहीनंभावदुष्टंकृतमश्रद्धयापियत् ॥ तद्धरंत्यसु
रास्तस्यमूढत्वादकृतात्मनः ॥ ४७ ॥ श्रद्धाविधिसमायुक्तंयत्कर्मक्रियतेनृभिः ॥ शुचिभिरेकचित्तैश्चतदानंत्यायकल्पते ॥ ४८ ॥
उदात्तमनुदात्तंचस्वरितंप्लुतमेवच ॥ द्रुतंचस्वरितोदात्तंस्वरंविद्यात्तथाप्लुतम् ॥ ४९ ॥ स्वरांतंव्यंजनांतंचविसर्गांततथैवच ॥ सानु
स्वारंपृथक्चज्ञातव्यंपरमंचयत् ॥ १५० ॥ वृत्रंशतक्रतुर्हंतिवज्रेणशतपर्वणा ॥ यथातथाप्रवक्तारंमंत्रोहीनःस्वरादिभिः ॥ ५१ ॥
स्वरतोवर्णतःसम्यक्संध्यास्नानजपादिषु ॥ सर्वेमंत्राःप्रयोक्तव्याहीनाःस्युरफलानृणाम् ॥ ५२ ॥ नाभेरधस्तादंगानिक्षालयित्वामृदंभसा ॥
उपरिष्टांद्रवस्त्रेणमंत्रैःप्रोक्ष्यशुचिर्भवेत् ॥ ५३ ॥ चतुरश्चतुरस्त्वंघ्र्योर्द्वौद्वौचजंघयोस्तथा ॥ द्वौद्वौचजानुनोर्न्यस्यऊर्वोः पंचपंचच ॥
॥ ५४ ॥ द्वौद्वावपितथागुह्यदेशचोदरवक्षसोः ॥ द्वौद्वौचगलबाह्वोश्चद्वौद्वावंसेमुखेपिच ॥ ५५ ॥ द्वौद्वौचचक्षुषोःश्रुत्योःसप्तोंकारांश्चमू
र्धनि ॥ न्यस्तप्रणवसर्वांगः स्नातः स्यात्सर्ववारिषु ॥ ५६ ॥ अकारं मूर्ध्नि विन्यस्य चोकारं नेत्रमध्यतः ॥ मकारं कंठदेशे तु ब्रह्मीभवति वै

द्विजः ॥ ५७ ॥ अव्यंगाक्लिष्टधौतेतुविद्वाञ्छुक्लेंचवाससी ॥ परिधायमृदंबुभ्यामूरूपादौघमार्जयेत् ॥ ५८ ॥ तद्वाससौरसंपत्तौशाणक्षौ
माविकानितु. ॥ कुतपंयोगपट्टंवाद्विवासास्तुयथाभवेत् ॥ ५९ ॥ नजीर्णनीलकाषायमांजिष्ठनतुवाससां ॥ मूत्राद्युपहतेनैवशुचिः
स्यादेकवाससा ॥ १६० ॥ एवंवासोयथाप्राप्तंपरिधायमनःशुचिः ॥ अन्यत्कृत्वोत्तरासंगमाचम्यप्राङ्मुखःस्थितः ॥ ६१ ॥
प्रत्योंकारसमायुक्ताःप्रणवाद्यंतकास्तथा ॥ महाव्याहृतयःसप्तदैवतर्ष्यादिसंयुताः ॥ ६२ ॥ प्रणवाद्यंतगायत्रीशिरस्तस्यास्तथैवच ॥
त्रिरावर्तनमेतस्याःप्राणायामोविधीयते ॥ ६३ ॥ शक्त्याप्सुसंयमंकृत्वातथाचम्यविधानतः ॥ उपास्यविधिवत्संध्यामुपस्थायचभा
स्करम् ॥ गायत्रींशक्तितोजप्त्वातर्पयेद्देवताःपितॄन् ॥ ६४ ॥ अन्वारब्धेनसव्येनपाणिनादक्षिणेनतु ॥ तृप्यतामितिसेक्तव्यंनाम्नातुप्र
णवादिना ॥ ६५ ॥ ब्रह्मेशकेशवान्पूर्वंप्रजापतिमथाब्रवीत् ॥ छंदोयक्षान्नृषीन्सिद्धानाचार्यांश्चेतरानपि ॥ ६६ ॥ गंधर्ववत्सरर्तूश्चमा
सान्दिनानिशास्तथा ॥ देवान्देवानुगांश्चैवनागान्नागकुलानिच ॥ ६७ ॥ सरितःसागरांस्तीर्थान्पर्वतान्कुलपर्वतान् ॥ किन्नरान्खेचरान्य
क्षान्मनुष्यानथतर्पयेत् ॥ ६८ ॥ सनकश्चततःपश्चात्सनंदनसनातनौ ॥ आसुरिःकपिलश्चैववोढुःपंचशिखस्तथा ॥ ६९ ॥ मनुष्यांन्यातु
धानांश्चतेषांचैवकुलान्यपि ॥ सुपर्णांश्चपिशाचांश्चभूतान्यथपशूंस्तथा ॥ १७० ॥ वनस्पतीनोषधीश्चभूतग्राममंचतुर्विधम् ॥ ब्रह्माद्योमयाहू
ताआगच्छंत्वाददन्त्वपः ॥ ७१ ॥ अनृणंमांप्रकुर्वंतुप्रसीदंतुममोपरि ॥ ततःपूर्वाग्रदर्भेषुसाग्रेषुसकुलेषुच ॥ प्रदेशकेषुशुद्धेषुब्रह्मादि
भ्योंबुसेचयेत् ॥ ७२ ॥ अन्वारब्धापसव्येनपाणिनादक्षिणेनतु ॥ भूतलेदक्षिणंजानुंकृत्वासिंचेज्जलंसुतः ॥ ७३ ॥ देवेभ्यश्चन
मःस्वाहापितृभ्यश्चनमःस्वधाः ॥ मन्यंतेकवयःकेचिदित्येवंतर्पणेक्रमम् ॥ ७४ ॥ तर्प्यमाणेषुकर्मत्वंत्यजंतंचक्रियांपदम् ॥ तर्पयामि

पितॄन्देवानित्याहुरपरेपुनः ॥ ७५ ॥ सिच्यमानेनतोयेनमन्यंतेमुनयोपरे ॥ देवास्तृप्यंतुपितरस्तृप्यंत्वितितिनिदर्शनम् ॥ ७६ ॥ उदीरता
मंगिरसआयंतुनोर्जमित्यपि ॥ पितृभ्यश्चस्वधायिभ्योयेचेहपितरस्तथा ॥७७॥ अग्निष्वात्तोपहूताश्चतथाबर्हिषदोपिच ॥ येनःपूर्वेचपितरः
सोमपानामुदीरयेत् ॥ ७८ ॥ आवाह्यपितॄनथतैरपसव्योपकीर्तितः ॥ दक्षिणाभिमुखोद्वाभ्यांकराभ्यामंबुसेचयेत् ॥ ७९ ॥ भूलग्नसव्य
जानुश्चदक्षिणाग्रकुशेषुच ॥ रुक्मरौप्यानिलैस्ताम्रमंत्रैर्दर्भैःक्षिपेत्पयः ॥ १८० ॥ विनारौप्यसुवर्णाभ्यांविनाताम्रतिलैरपि ॥ विनाद
र्भैश्चमंत्रैश्चपितॄणांनोपतिष्ठति ॥८१॥दर्भालोहितदर्भश्चकाशवीरणवल्वजैः ॥ शूकधान्यतृणैर्वापिदर्भकार्यंश्रयेद्द्विजः॥८२॥नतर्पयेत्पतेती
भिर्विद्वानद्भिःकथंचन ॥ पात्रस्थाभिःसदर्भाभिःसतिलाभिश्चतर्पयेत् ॥ ८३ ॥ वसूंरुद्रांस्तथादित्यान्नमस्कारसमन्वितान् ॥ एतेचादि
व्यपितरएतदायान्तुमानुषम् ॥ ८४ ॥ ध्रुवोधरश्चसोमश्चआपश्चैवानिलोनलः ॥ प्रत्यूषश्चप्रभासश्चवसवोष्टौप्रकीर्तिताः ॥ ८५ ॥ अजै
कपादहिर्बुध्न्योविरूपाक्षश्चत्र्यंबकः ॥ हरश्चविश्वरूपश्चरैवतश्चसुरेश्वरः ॥ ८६ ॥ सावित्रश्चजयंतश्चपिनाकीचापसंज्ञितः ॥ एतेरुद्राःसमा
ख्याताएकादशसुरोत्तमाः ॥ ८७ ॥ इन्द्रोधाताभगःपूषामित्रोथवरुणोर्यमा ॥ अंशुर्विवस्वांस्त्वष्टाचसविताविष्णुरेवच ॥ ८८ ॥ एते
वैद्वादशादित्यादेवानांपरमाः स्मृताः ॥ एवंहिदिव्यपितरःपूज्याःसर्वैप्रयत्नतः ॥८९॥ कव्यवाहोनलःसोमोयमश्चैवतथार्यमा॥अग्निष्वात्ता
सोमपाश्चतथाबर्हिपदोपिच ॥१९०॥ एतेचान्येचपितरःपूज्याःसर्वैप्रत्नतः ॥ एतैस्तुतर्पितैःसर्वैःपुरुषास्तर्पितानृभिः ॥ ९१॥ यमश्चधर्मरा
जश्चमृत्युश्चैवतथान्तकः ॥ वैवस्वतश्चकालश्चसर्वभूतक्षयस्तथा॥९२॥ औदुंबरश्चनीलश्चदध्नश्चपरमेष्ठिनः ॥ चित्रश्चचित्रगुप्तश्चवृकोदरस्त
थार्यमा॥९३॥एतैस्तुतर्पितैःसद्भिर्विधंस्यात्तर्पितंनरैः ॥ तस्मात्प्राक्तर्पयित्वेतान्पित्रादींस्तर्पयेत्ततः॥९४॥ मातामहान्मातुलाँश्चसाक्षिसंबं

धिवान्धंवान्॥स्वजनाज्ञातिवर्गीयानुपाध्यायान्गुरूनपि॥९५॥मित्रान्भृत्यानपत्यांश्चयेभवंतितदाश्रिताः॥तान्सर्वांस्तर्पयेद्विद्वानीहंतेतेयतो
जलम् ॥ ९६ ॥ जलस्थश्चजलेसिंचेत्स्थलस्थश्चतथास्थले ॥ पादौस्थाप्योभयत्रापिप्रक्षाल्योभयतःशुचिः॥ ९७ ॥ जलेजलस्थआचा
मेत्स्थलस्थश्चस्थलेशुचिः ॥ पादौस्थाप्योभयत्रैवआचांतः शुचितामियात् ॥ ९८ ॥ यज्जलेशुष्कवस्त्रेणस्थलेचैवार्द्रवाससा ॥
कुर्याद्धोमंजपंदानंतत्सर्वंनिष्फलंभवेत् ॥ ९९ ॥ नार्द्रवासाःस्थलस्थस्तुबुधस्तर्पणमाचरेत् ॥ जानुदघ्नजलस्थोवाविगलत्स्नानव
स्त्रकः ॥ २०० ॥ गोशृंगमात्रमुद्धृत्यकरौविप्रोजलेस्थितः ॥ अंबरेतुक्षिपेद्वारिपितॄणांतृप्तिमावहन् ॥ १ ॥ कराभ्यांसेचयेद्वारिआका
शेदक्षिणामुखः ॥ पितॄणांस्थानमाकाशंदक्षिणादिक्तथैवच ॥ स्थलगोनार्द्रवासस्तुकुर्याद्वैतर्पणादिकम् ॥ वेवाहतेनार्द्रवासानेक
वासाःसमाचरेत् ॥ २ ॥ एवंहितर्पणंकृत्वासर्वेषांविधिवद्द्विजः ॥ निष्पीडयेत्स्नानवस्त्रंस्नातोयेनभवेद्द्विजः ॥ ३ ॥ निष्पीडयतियः
पूर्वंस्नानवस्त्रमबुद्धिमान् ॥ निराशाःपितरस्तस्ययान्तिदेवाःसहर्षिभिः ॥ ४ ॥ विष्पीडयेत्स्नानवस्त्रंतिलदर्भसमन्वितम् ॥ नपूर्वंतर्प
णाद्वस्त्रंनचांभसिनपादयोः ॥ ५ ॥ एषुचेत्पीडयेद्वस्त्रंराक्षसानांफलंभवेत् ॥ वस्त्रनिष्पीडनेविप्रइमंश्लोकमुदीरयेत् ॥ ६ ॥ येमेकुले
लुप्तपिंडाःपुत्रदारविवर्जिताः ॥ तेषांप्रदत्तमक्षय्यमिदमस्तुतिलोदकम् ॥ ७ ॥ पितृवंशेमृतायेचमातृवंशेकुमृत्युना ॥ तेषांतृप्तिभव
त्वेष्मातिलमिश्रेणवारिणा ॥ ८ ॥ जलमध्येतुयःकश्चिद्ब्राह्मणोज्ञानदुर्बलः ॥ निष्पीडयतिचेद्वस्त्रंस्नानंतस्यवृथाभवेत् ॥ ९ ॥ यदप्सु
मलनिक्षेपःशौचस्नानादिकुर्वतः ॥ तत्पापस्यव्यपोहार्थमिमंमंत्रमुदीरयेत् ॥ २१० ॥ यन्मयादूषितंतोयंमलैःशारीरसंभवैः ॥ तस्यपा
पस्यनिष्कृत्यैयक्ष्मणस्तवतर्पणम् ॥ ११ ॥ अंतरेभ्योथयक्ष्मभ्योदद्यादेतांजलांजलिम ॥ अन्यथाघ्नंतितेसर्वंसुकृतंपूर्वसंचितम् ॥ १२ ॥

अपुत्रायेमृताःकेचित्पुमांसोयेऽपितोपिवा ॥ अस्मद्वंशेतुतेभ्योवैदत्तंवस्त्रजलंमया ॥ १३ ॥ नास्तिक्येनापियोविप्रस्तर्पयेत्पितृदेवताः ॥
सतत्तृप्तिकृतोधर्मात्प्राप्नुयात्परमांगतिम् ॥ १४ ॥ नास्तिक्यावस्थितोयस्तुतंतर्पयेन्नपितृन्द्विजः ॥ पिबंतिदेहनिःस्रावंपितरस्तज्जला
र्थिनः ॥ १५ ॥ पितृणांपितृतीर्थेनदेवानांदैवकेनतु ॥ इतिमत्वाप्रकुर्वाणामुच्यंतेगृहमेधिनः ॥ १६ ॥ पंचतीर्थानिविप्रस्यकरेतिष्ठं
तिदक्षिणे ॥ ब्राह्मंदैवंतथापित्र्यंप्राजापत्यंचसौमिकम् ॥ १७ ॥ ब्राह्मंपश्चिमलेखायांदैवमंगुलिमूर्धनि ॥ प्राजापत्यंकनिष्ठांदौमध्येसौम्यं
विजानता ॥१८॥ अंगुष्ठस्यप्रदेशिन्यामध्येपित्र्यंप्रतिष्ठितम् ॥ कुर्याद्योहरहश्चैवसम्यग्ज्ञात्वाविधानतः ॥१९॥ समाप्नुयाद्गृहस्थोपिब्रह्म
णःपदमव्ययम्॥स्नात्वांजप्त्वाचहुत्वाचशक्त्यादत्वाचयोऽश्नुते ॥२०॥सोमृतंनित्यमश्नातितस्यस्नानमनामयम्॥अस्नात्वाश्नन्मलंभुंक्ते
अजप्त्वापूयशोणितम् ॥ अहुत्वाचकृमीन्कीटानदत्वाचशकृत्तथा ॥ २१ ॥ आह्लादकारणंस्नानंदुःखशोकापहंतथा ॥ दुःस्वप्ननाशनंचैव
कार्यंस्नानमनःसदा ॥ २२ ॥ चित्तप्रसादबलरूपतपांसिमेधांपुण्यंचसौख्यसुभगत्वमरोगितांच ॥ ओजस्वितांविषमदात्पुरुषस्यचीर्णं
स्नानंयशोविभवपुण्यमलोलुपत्वम् ॥२३॥ गीर्वाणवृंदद्विजसत्तमस्तुतःप्रातामयायस्तुवसिष्ठपौत्रतः ॥ पापंप्रणाशंवितनोतियःश्रुतःप्रोदी
रितःस्नानविधिःसलेशतः ॥ २४ ॥ उद्देशतोमयाप्रोक्तःस्नानस्यपरमोविधिः ॥ द्विजन्मनांहितार्थंचजपस्याथपरोविधिः ॥ २५ ॥ ॥
इतिबृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांषट्कर्मणिस्नानविधिर्नाम द्वितीयोऽध्यायः॥२॥अथजपविधिरुच्यते ॥जपस्याथप्रवक्ष्यामि
विधिंपाराशरोदितम् ॥ यावद्विधोजपोयस्तुयथाकार्योद्विजातिभिः ॥ १ ॥ जप्यानिब्रह्मसूक्तानिशिवसूक्तानिचैवहि ॥ वैष्णवानिचसूक्ता
नितथासौराण्यनेकधा ॥ २ ॥ सारस्वतानिदौर्गाणिवारुण्यान्यानिलानिच ॥ पौराणिकानिचान्यानितथासैद्धांतिकानिच ॥ ३ ॥ सर्वेषां

जप्यसूक्तानामृचांचयजुषांतथा ॥ साम्नांचैकाक्षरादीनांगायत्रीपरमोजपः ॥ ४ ॥ तस्याश्चैवतुओंकारोब्रह्मणायमुपासितः ॥ आभ्यां
तुपरमंजप्यंत्रैलोक्येपिनविद्यते ॥ ५ ॥ तयोस्तुदैवतछंदादिसमासेनाभिधीयते ॥ येनविज्ञातमात्रेणद्विजोब्रह्मत्वमाप्नुयात् ॥ ६ ॥
आसीन्नैवयदाकिंचित्सदेवासुरमानुषम् ॥ तदैकाक्षरमेवासीदात्मविन्यस्तविश्वकः ॥ ७ ॥ गतभीरद्वितीयोपिएकाकीसनमोदते ॥
चिंतयामासगायत्रींप्रत्यक्षासाभवत्तदा ॥ ८ ॥ गायत्रीसाभवत्पत्नीप्रणवोभूत्पतिस्तदा ॥ पुनरन्योन्यदांपत्यादितिताभ्यामभूज्जगत्
॥ ९ ॥ प्रणवोहिपरंतत्त्वंत्रिवेदंत्रिगुणात्मकम् ॥ त्रिदैवतंत्रिधामंचत्रिःप्रज्ञंत्रिरवस्थितम् ॥ १० ॥ त्रिमात्रंचत्रिकालंचत्रिलिंगंमुनयोविदुः ॥
सर्वमेतत्त्रिरूपेणव्याप्तंतुप्रणवेनहि ॥ ११ ॥ ऋग्यजुःसामवेदाश्चत्रिवेदीतिनिगद्यते ॥ सत्वंरजस्तमश्चैवात्रिगुणीपरिकीर्त्यते ॥१२॥ ब्रह्मावि
ष्णुस्तथेशानस्त्रिदैवतमितीर्यते ॥ अग्निःसूर्यश्चसोमश्चत्रिधामेतिप्रकीर्त्यते ॥१३॥ अंतःप्रज्ञंबहिःप्रज्ञंघनप्रज्ञमुदाहृतम् ॥ हृत्कंठतालुके
चेतित्रिस्थानमिदमुच्यते ॥ १४ ॥ अकारोकारमाश्चेतित्रिमात्रःप्रोच्यतेबुधैः ॥ भूतंभव्यंभविष्यंचत्रिकालमितिसंस्मृतं ॥ १५ ॥
स्त्रीपुन्नपुंसकंचेतित्रिलिंगइतिसस्मृतः ॥ त्रिस्वभावस्थितोदेवोमंतव्योब्रह्मवादिभिः ॥ १६ ॥ पर्यवस्यतियत्रैवविश्वमुत्पद्यतेयतः ॥
निर्मात्रकःसमात्रोपिसादिरेवनिरादिकः ॥ १७ ॥ सजप्यःसर्वदासद्भिर्ध्यातव्यश्चविधानतः ॥ वेदेषुचैवशास्त्रेषुबहुधासंव्यवस्थितः ॥ १८ ॥
तथासत्यपिचैकोयंघटाकाशइवस्थितः ॥ कर्मारंभेषुसर्वेषुत्रिमात्रः सप्रकीर्तितः ॥ १९ ॥ स्थितोयत्रयथोक्तश्चस्मर्तव्यःसतथैवच ॥
ऋग्वेदेस्वरितोदात्तउदात्तश्चयजुःश्रुतौ ॥ २० ॥ सामवेदेसविज्ञेयोदीर्घःसप्लुतएवच ॥ सनत्कुमारसिद्धांतेप्रणवोविष्णुरुच्यते ॥
॥ २१ ॥ यस्मिंस्तस्यचविश्रांतिस्तत्परब्रह्मसंज्ञकं ॥ उच्चारितस्यतस्याथविश्रांतौचयदक्षरं ॥ तदक्षरंसदाध्यायेद्यत्तत्रैवप्रलीयते ॥

॥ २२ ॥ घंटास्वनितवत्तस्यविश्रांतिःशब्दवेधसः ॥ कुर्वीतब्रह्मविद्विप्रोयदीच्छेद्योगमात्मनः ॥ २३ ॥ सर्वस्यापिचशब्दस्यह्यंत
उच्चारितस्ययत ॥ तद्धद्यायंयस्तुसज्ज्ञानीशब्दब्रह्मविदुच्यते ॥ २४ ॥ याज्ञवल्क्योमुनीनांचप्राग्ब्रवीज्जनकस्यच ॥ वासिष्ठजोपि
तंब्रूयात्स्वभावंशब्दवेधसः ॥ २५ ॥ तैलधारामिवाच्छिन्नंदीर्घघंटानिनादवत् ॥ अपस्तंप्रणवस्याग्रंयस्तंवेदसवेदवित् ॥ २६ ॥
तंब्रूयात्स्वभावंशब्दवेधसः ॥ २५ ॥ तैलधारामिवाच्छिन्नंदीर्घघंटानिनादवत् ॥
स्थित्वासर्वेषुशब्देषुतर्क्यात्मनेनवै ॥ नतेनहिविनाकिंचिद्रकुंयातिगिरापियत् ॥ २७ ॥ उद्गीथमक्षरंह्येतदुद्गीथःसमुपास्यते ॥ उपा
स्यामध्यतस्त्वेपनादंविश्रावयेद्यदि ॥ २८ ॥ प्रणवाद्याः स्मृतावेदाःप्रणवेपर्यवस्थिताः ॥ वाङ्मयंप्रणवेसर्वंतस्मात्प्रणवमभ्यसेत् ॥
॥ २९ ॥ ब्रह्मार्पंतत्रविज्ञेयमग्निस्तद्देवतंमहत् ॥ आद्यंछंदःस्मरेत्तत्रनियोगोब्रह्मादिकर्मणि ॥ ३० ॥ उत्पन्नमेतत्तुयतः
समस्तंव्यावृत्यतिष्ठत्प्रलयेपियत्र ॥ एकाक्षरेणापिजगंतियेनव्याप्तानिकोन्यः परमोस्तितस्मात् ॥ ३१ ॥ ध्येयंनजप्यंनचपूजनीयं
यस्मान्नदेवाद्वरणीयमन्यत् ॥ दुस्तारसंसारपयोधिमग्नतारायविष्णुःपरमःसपूज्यः ॥ ३२ ॥ उक्तमुद्देशतोह्येतद्रूपमेवाक्षरस्यच ॥
जप्यानुसततंदेवी गायत्रीसाधुनोच्यते ॥ ३३ ॥ इतिश्रीबृह०षट्कर्मणिद्वितीयाऽध्यायेप्रणवरूपकथनं ॥ गायत्र्याः संप्रवक्ष्यामिदैवप्यां
दिक्रमेणतु ॥ अक्षराणांतुविन्यासंतेपांचैवतुदेवताः ॥ १ ॥ जपेयथाविधाकार्यायथारूपाचसार्चने ॥ होमेयथाचकर्तव्यायथार्थंचाभिचा
रके ॥ २ ॥ यत्फलंजपहोमादौयथावज्जप्यतेतुसा ॥ ध्यातव्याचयथादेवीयथावत्तन्निबोधत ॥ ३ ॥ गायत्रीतुपरंतत्त्वंगायत्रीपरमागतिः ॥
सर्वामरैरियंध्यातासर्वव्याप्तंतयाजगत् ॥ ४ ॥ उत्पद्यंतेत्रिपादायाःपुनस्तस्यांविशंतिदम् ॥ गायत्रीप्रकृतिर्ज्ञेयाओंकारःपुरुषःस्मृतः ॥
॥ ५ ॥ एतयोरेवसंयोगाज्जगत्सर्वंप्रवर्तते ॥ पादास्त्रयस्त्रयोवेदास्तेषुतत्त्वाक्षराणिच ॥ चतुर्विंशतिरेवास्यांतैर्हिव्याप्तमिदंजगत् ॥ ६ ॥

साम्नस्तृतीयंतुततोभवत्सासावित्रिदेवीस्वयमेवस्वर्गे ॥ ७ ॥ दैवत्यमस्याः
आदायचैकंप्रथमंतुपादमृग्भ्योद्वितीयंतुतथायजुर्भ्यः ॥ साम्नस्तृतीयंतुततोभवत्सासावित्रिदेवीस्वयमेवस्वर्गे ॥ ८॥ अस्यांतुतत्वाक्षरविंशति
सवितासुराच्यंश्छंदोपिगायत्रमभूत्परस्याः ॥ विश्वस्यमित्रोद्विजराजपूज्योमुनिर्नियोगस्तुजपादिकेषु ॥ ९ ॥ केचिद्धुताशंवदनंवदंतिसावित्रिदेव्याः
स्तुचत्त्वारिपादात्रितयंचतस्याम् ॥ भूरादिकाभिस्तिसृभिःप्रयुक्तांसोंकारमेतद्वदनंपरस्याः ॥ १० ॥ भूरादिकेनत्रितयेनपादंपदंचवेदात्रितयेनचास्याः ॥ प्राण
श्रुतितत्त्वविज्ञाः॥इबंचवक्रंसकलामराणामित्येतयाव्याप्तमशेषमेतत् ॥ ११ ॥ यस्तुयमस्यगद्विजवेत्तिपादंसवेत्तिविद्वान्परमंपदंतु ॥ व्याप्तिःपरास्याःसक
दिकेनत्रितयेनपादंप्रादेस्त्रिभिर्व्याप्तमशेषमस्याः ॥ १२ ॥ गायत्रींयोनजानातिज्ञात्वोपास्तेनयोद्विजः ॥ नामधारकमात्रोसौनविप्रःशूद्रएवसः ॥
लापिचैपांयोवेत्तिचैनांसतुवित्तमःस्यात्.॥ १२ ॥ गायत्रींयोनजानातिज्ञात्वोपास्तेनयोद्विजः ॥ नामधारकमात्रोसौनविप्रःशूद्रएवसः ॥ १४.॥ गायत्रीमेवयोज्ञात्वासम्यगभ्यर्चतेपुनः॥
॥ १३ ॥ किंवेदैःपठितैःसर्वैःसेतिहासपुराणकैः ॥ सांगैःसावित्रिहीनेननविप्रत्वमवाप्यते ॥ वेदेभ्योपिपडंगेभ्योगायत्र्यतिगरीयसी ॥
इहामुत्रचपूज्योसौब्रह्मलोकमवाप्नुयात् ॥ १५ ॥ गायत्रीचतथादेवाब्रह्मणातोलिताःपुरा. ॥ संन्यासंग्रद्विजोधनकुर्वन्ब्रह्मत्वमाप्नुयात् ॥ १७ ॥जानीयादक्षरंदेव्याःप्रथमंवाशुशुक्षणेः ॥
॥ १६ ॥ यदक्षरेतुदैवत्यंचतुर्विंशतिपूच्यते ॥ संन्यासंग्रद्विजोधनकुर्वन्ब्रह्मत्वमाप्नुयात् ॥ १७ ॥ षष्ठंचवारुणंतत्त्वंसप्तमंतुबृहस्पतेः ॥ १९ ॥ पार्जन्य
प्राभंजनंद्वितीयंतुतृतीयंशशिदैवतं ॥ १८ ॥ विद्युतश्चतुरीयंतुपंचमंतुयमस्यच ॥ षष्ठंचवारुणंतत्त्वंसप्तमंतुबृहस्पतेः ॥ १९ ॥ पार्जन्य
मष्टमंतत्त्वंनवमंचंद्रदैवतम् ॥ गांधर्वंदशमंविद्यात्त्वाष्ट्रमेकादशंतथा ॥ २० ॥ मैत्रावरुणमन्यद्वैतथान्यच्चत्रयोदशम. ॥ चतुर्दशंसुरेशस्य
प्राग्रिदंब्रह्मणास्मृतम् ॥ २१ ॥ मरुद्दैवतकंज्ञेयंपंचदशंयदक्षरम् ॥ सौम्यंचषोडशंतत्त्वंतथाचांगिरसंपरम् ॥ २२ ॥ विश्वेषांचैवदं
वानामष्टादशमथाक्षरम् .॥ आश्विनेकोनविंशंचविदुर्विंशंप्रजापतेः ॥ २३ ॥ .एकविंशंकुबेरस्यद्वाविंशंशंकरस्यच ॥ त्रयोविंशं

तथाब्राह्मचतुर्विंशच्चवर्णकम् ॥ २४ ॥ इतिज्ञात्वाद्विजःसम्यक्सर्वाअक्षरदेवताः ॥ कुर्वञ्जपादिकंविप्रःपरंश्रेयोधिगच्छति ॥ २५ ॥
पादांगुष्ठादिमूर्धांतमात्मनोवपुषिन्यसेत् ॥ अक्षराणिचसर्वाणिवांछन्ब्रह्मत्वमात्मनः ॥ २६ ॥ पादांगुष्ठयुगेत्वेकमेकैकंगुल्फयोर्द्वयोः ॥
जानुनोश्चद्वयोरेकमेकमूरुकयोर्द्वयोः ॥ २७ ॥ गुह्यकस्यांतथैकैकमेकैकंजठरोरसोः ॥ स्तनद्वयेतथैकैकंन्यसेदेकंगलेतथा ॥ २८ ॥
वक्त्रेतालुनिहृत्कच्छुत्योश्चतुर्ष्वेकैकमेवच ॥ भ्रुवोर्मध्येतथैवैकंललाटेचैकमेवहि ॥ २९ ॥ याम्यपश्चिमसौम्येषुएकैकंचैवमूर्धनि ॥
गायत्रीन्यस्तसर्वांगोगायत्रीब्रह्मउच्यते ॥ ३० ॥ लिप्यतेनैवपापेनपद्मपत्रमिवांभसा ॥ प्रोक्तःप्रणवविन्यासोव्याहृतीनामथोच्यते ॥
॥ ३१ ॥ सप्तभिर्व्याहृतीन्र्न्यस्यभवेद्देहोजपादिषु ॥ भूर्लोकंपादयोर्न्यस्यभुवर्लोकंतुजानुनोः ॥ ३२ ॥ स्वर्लोकंकटिदेशेतुनाभि
देशेमहस्तथा ॥ जनलोकंतुहृदयेकंठदेशेतपस्तथा ॥ ३३ ॥ भ्रुवोर्ललाटसंध्योस्तुसत्यलोकःप्रतिष्ठितः ॥ हिरण्मयेपरेकोशेविर
जंब्रह्मनिष्कलम् ॥ ३४ ॥ तच्छुद्धंज्योतिषांज्योतिस्तद्यदात्मविदोविदुः ॥ देवस्यसवितुर्भर्गोवरणीयंचधीमहि ॥ ३५ ॥ तदस्माकं
धियोयस्तुब्रह्मत्वेचप्रचोदयात् ॥ छंदोदैवतमार्षंचविनियोगंचब्राह्मणम् ॥ ३६ ॥ मंत्रंपंचविधंज्ञात्वाद्विजःकर्मसमाचरेत् ॥ स्वर
तोवर्णतश्चैवपरिपूर्णंभवेद्यथा ॥ ३७ ॥ हीनंनैवप्रयुंजीतमंत्रंतुमात्रयापिच ॥ देवतायतनेकुर्याज्जपंनद्यादिकेषुच ॥ ३८ ॥ आश्र
मेषुयतीनांचगोष्ठेवास्वगृहेपिवा ॥ चतुर्ष्वेतिमपूर्वेषुह्युत्तमादिक्रमेणतु ॥ दशगुणंसहस्रंस्यात्फलंविष्णावनंतकम् ॥ ३९ ॥ अप्स
मीपेजपंकुर्यात्ससंख्यंतद्भवेद्यथा ॥ असंख्यमासुरंयस्मात्तस्मात्तद्गणयेद्ध्रुवम् ॥ ४० ॥ स्फाटिकेंद्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः ॥
अक्षमालाप्रकर्तव्याप्रशस्ताचोत्तरोत्तरा. ॥ ४१ ॥ अभावेत्वक्षमालायाःकुशग्रंथ्याथपाणिना ॥ यथाकथंचिद्गणयेत्ससंख्यंतद्भवेद्य

था ॥ ४२ ॥ प्रणवोभूर्भुवःस्वश्चपुनःप्रणवसंयुतम् ॥ अंत्योंकारसमायुक्तांमन्यंतेमुनयोपरे ॥ ४३ ॥ प्रणवांतेतथाचादावाहुरन्यज
पक्रमम् ॥ आदावंतेतुचोंकारआवृतावादिकोंततः ॥ ४४ ॥ तदाद्यंचतदंतंचकुर्यात्प्रणवसंपुटम् ॥ आद्यंतरक्षितांकुर्यादितिपाराशरो
ब्रवीत् ॥ ४५ ॥ योनवांछतिसंतानंमोक्षमिच्छतिकेवलम् ॥ प्रत्योंकारमसौकुर्वन्नक्षरंमोक्षमाप्नुयात् ॥ ४६ ॥ अक्षरप्रातिलोम्ये
मसोंकारेणक्रमेणतु ॥ फट्कारांतांचकुर्वीतप्रेच्छन्नारिवधंबुधः ॥ ४७ ॥ होमेपिचजपंकुर्यात्प्रणवावर्तनंबुधः ॥ अभिप्रतायहोमादौ
स्वाहांतांतामुदीरयेत् ॥ ४८ ॥ संकीर्णतांयदापश्येद्रोगाद्वाद्विषतोपिवा ॥ तदाजपेच्चगायत्रींसर्वदोषापनुत्तये ॥ ४९ ॥ रुद्रजा
प्यानिकार्याणिसूक्तंचपुरुषस्यच ॥ शिवसंकल्पजाप्यंचसर्वंकुर्याद्विधानतः ॥ ५० ॥ जाप्यानिघ्नंतिपापानिश्रेयोदद्युस्तदर्थिनाम् ॥
अतोजपंसदाकुर्याद्यदीच्छेच्छुभमात्मनः ॥ ५१ ॥ द्रुपदांवाजपेद्देवीमजपांजंतुकांतथा ॥ प्रणवंचसदाभ्यस्येद्यदिब्रह्मत्वमिच्छति ॥
॥ ५२ ॥ प्राणानामयुताभ्यांचतथाषोडशभिःशतैः ॥ पुंसोगच्छत्यहोरात्रंतत्संख्याजपांविदुः ॥ ५३ ॥ रविमंडलमध्यस्थपुरुषेलो
कसाक्षिणि ॥ समर्पितंमयाचेदंसूर्याख्येब्रह्मणःपदे ॥ ५४ ॥ नजपंप्रसभंकुर्यात्प्रसभंघ्नंतिराक्षसाः ॥ ब्रह्मणाभागधेयस्तुतेषांचैववाविधिः
कृतः ॥ ५५ ॥ उपांशुतुजपंकुर्याद्ब्राह्मणोवाथमानसम् ॥ विवृतोष्ठमुपांशुःस्यादचलोष्ठंचमानसम् ॥ ५६ ॥ द्विविधस्तुजपःप्रोक्तउपांशु
र्मानसस्तथा ॥ उपांशुःस्याच्छतगुणः साहस्रोमानसःस्मृतः ॥ ५७ ॥ उपांशुजपयुक्तस्यमानसेचरतस्तथा ॥ इहैवायातिविविधोमातिपाराशर्यो
वदत् ॥ ५८ ॥ विधियज्ञाःपाकयज्ञायेचान्येहव्योमखाः ॥ सर्वेतेजपयज्ञस्यकलांनार्हंतिषोडशीम् ॥ ५९ ॥ जप्येनैकेनसिद्धेन्नाकिंनासिद्धंभवेदिह ॥
कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥ ६० ॥ शतेनजन्मजनितंसहस्रेणपुराकृतम् ॥ अयुतेनत्रिजन्मोत्थंगायत्रीहंतिपातकम् ॥ ६१ ॥ अ

स्मिन्कलौचविदुषाविधिवत्कर्मयत्कृतम् ॥ भवेद्दशगुणंतद्धत्कृतादेर्युगतोधिकम् ॥ ६२ ॥ नचतच्छक्यतेकर्तुंमंत्राम्नायस्यदूषणात् ॥
अयथार्थंकृतात्पापान्मंत्रसिद्धिर्गरीयसी ॥ ६३ ॥ नचंक्रमन्नचहसन्नपार्श्वमवलोकयन् ॥ नान्यासक्तोनजल्पँश्चनचैवोर्ध्वशिरास्तथा॥६४॥
नांघ्रिणापीडयन्पादंनचैवंहिकरावपि ॥ नैवंविधंजपंकुर्यान्नचसंचालयेत्करम् ॥ ६५ ॥ प्रच्छन्नानिचदानानिज्ञानंचनिरहंकृतम् ॥ जंप्ता
निचसुगुप्तानितपांफलमनंतकम् ॥ ६६ ॥ यएवमभ्यसेन्नित्यंब्राह्मणःसंयतेंद्रियः ॥ ब्रह्मलोकमवाप्नोतिध्यानादेवार्चनप्रदापि ॥ ६७ ॥
अथान्यत्संप्रवक्ष्यामियथातातपितामहः ॥ लब्धवान्वेधसःपृष्टाद्गायत्रीध्यानमुत्तमम् ॥ ६८ ॥ यदक्षरेषुयद्वर्णंयत्रयत्रचयत्स्मरेत् ॥
यत्फलंलभतेकृत्वायथास्याःसमर्चनम् ॥ ६९ ॥ तत्प्रकृतिःसचस्वांतंविकारोबुद्धिरेवच ॥ तुरित्येतदहंकारंविशब्दंविद्धिपापहम् ॥
॥ ७० ॥ रंस्पर्शंचणिरूपंचयंरसंगंधमत्रभम् ॥ गोश्रोत्रंदेत्वचंवाचक्षुःस्यरसनातथा ॥ ७१ ॥ धीनासाचमवाचीचहिहस्तौधीचयद्ध
यम् ॥ योउपस्थंमुखंयोन्योनःखंप्रकारमारुतम् ॥ ७२ ॥ चोतेजोदजलंयात्सागायत्र्यास्तत्वचिंतना ॥ चतुर्विंशतितत्वानांप्रत्येकं
चाक्षरेषुयः ॥ ७३ ॥ गायत्र्याःसंस्मरेद्योगीसयातिब्रह्मणःपदम् ॥ तकारंपादयोर्न्यस्यब्रह्मविष्णुशिवाकृतिम् ॥ ७४ ॥ शांतंपद्मास
नारूढंध्यानादहतिकिल्बिषम् ॥ सकारंगुल्फयोर्न्यस्येदतसीपुष्पसंनिभम् ॥ ७५ ॥ पद्ममध्यस्थितंसौम्यंनिर्दहेच्चोपपातकम् ॥
विकारंजंघयोर्दीप्तंध्यायेदेवंद्विजोत्तमः ॥ ७६ ॥ ब्रह्महत्याकृतंपापंहन्यादेतत्स्मृतंक्षणात् ॥ तुकारंजानुदेशंतुइंद्रनीलसमप्रभम् ॥
निर्दहेत्सर्वपापानिमहदोपानुपद्रवम्॥७७॥ऊर्वोर्वविमलंध्यायच्छुद्धस्फटिकसद्युतिम् ॥ विज्ञातंहन्तितत्पापमगम्यागमनभत्कृतम् ॥ ७८ ॥ ॥११॥
रेकारंवृषणेप्रोक्तंविद्युत्स्फुरिततेजसम् ॥ मित्रद्रोहकृतंपापंसंस्मरन्नाशयेद्द्विजः ॥ ७९ ॥ णिंगुह्येश्वेतवर्णंतुजातीपुष्पसमद्युतिम् ॥ गुरु

हत्याकृतंपापंनाशयेच्चिंतनादिह ॥ ८० यंकन्यांतारकावर्णंचंद्रवद्धिष्ण्यभूषितम् ॥ योगिनांवरदंप्राहुर्ब्रह्महत्याविशोधनम् ॥ ८१ ॥
भकारंचालिवर्णाभंमेघोन्नतमहाद्युतिम् ॥ ध्यात्वाकमलमध्यस्थंमहदहतिपातकम् ॥ ८२ ॥ जठरेभृंगवर्णस्तुमात्राद्वयविभूषितः ॥ गोह
त्यादिकृतंपापंगोकारस्तुविशोधयत् ॥ ८३ ॥ श्यामरक्तंतुदेकारंध्यानंतद्विशयेद्धृदि ॥ हृदिकुंदेंदुवर्णाभंवकारमसृतस्रवम् ॥ ८४ ॥
पितृमातृवधोद्भूतंमित्रावरुणदेवतम् ॥ गुरुहत्याकृतंपापंवकारेणप्रणश्यति ॥ ८५ ॥ स्यकारंविन्यसेत्कंठेत्वाष्ट्रंस्फटिकसंन्निभम् ॥
मनसोपार्जितंपापंस्यकारेणंप्रणश्यति ॥ ८६ ॥ धीकारंवसुदैवत्यंवदंन्तिस्वर्णसन्निभम् ॥ प्राणिहत्याकृतंपापंधीकारेणप्रणश्यति ॥
॥ ८७ ॥ मकारंपद्मनाभंतुस्फुरंतंदोतृतेजसम् ॥ पूर्वजन्मकृतंपापमकारेणप्रणश्यति ॥ ८८ ॥ हिकारंनासिकाग्रेतुपूर्णचंद्रसम
प्रभम् ॥ पूर्वात्पूर्वतरंपापंस्मरणादेवनश्यति ॥ ८९ ॥ धिकारंशांतमक्ष्णोश्चपीतवर्णंसुधांशुवत् ॥ मनोवाक्कायजंपापंचिंतितादे
वनश्यति ॥ ९० ॥ योकारौद्रौधूम्रनीलौभ्रूललाटेचसंस्थितौ॥ध्यायन्नित्यंद्विजोनूनंसर्वपापैःप्रमुच्यते ॥ ९१ ॥ नकारंतुमुखेपूर्वे
द्वादशादित्यसन्निभम् ॥ सकृद्ध्यायन्द्विजश्रेष्ठःप्राप्नोतिब्रह्मणःपदम् ॥ ९२ ॥ प्रकारंदक्षिणवक्त्रेकालमग्निरुद्रसन्निभम् ॥ सकृध्या
त्वाद्विजश्रेष्ठऐश्वर्यंपदमाप्नुयात् ॥ ९३ ॥ चोकारंपश्चिमेवक्त्रेविद्युद्दीप्तिसमप्रभम् ॥ एकवारंद्विजाध्यात्वावैष्णवंपदमा
प्नुयात् ॥ ९४ ॥ दकारमुत्तरेवक्त्रेशुक्लवर्णसमद्युतिम् ॥ सकृध्यानाद्विजश्रेष्ठःप्राप्नुयात्पदमव्ययम् ॥ ९५ ॥ याकारस्तुशि
रःप्रोक्तंचतुर्वदनसंयुतम् ॥ सएषत्रिगुणःप्रोक्तश्चतुर्विंशतिमस्फुटम् ॥ ९६ ॥ यंयंपश्यन्तिचक्षुर्भ्यांयंयंस्पृशंतिपाणिना ॥ यंयमाभाष
तेकिंचित्तत्सर्वंपूतमेवच ॥ ९७ ॥ जाप्येतुत्रिपदाज्ञेयापूजनेतुचतुष्पदा ॥ न्यासेजप्येतथाध्यानेअग्निकार्येतथार्चने ॥ ९८ ॥ सर्वत्र

त्रिपदाज्ञेयाब्राह्मणैस्तत्त्वचिन्तकैः ॥ जंबुकान्तमसादेवीयजुर्वेदेप्रतिष्ठिता ॥ ९९ ॥ अंतर्जलेत्रिरावर्त्यमुच्यतेब्रह्महत्यया ॥ सादेवीद्व
पदानाममंत्रेवाजसनेयके ॥ १०० ॥ अंतर्जलेत्रिरावर्त्यगुरुतल्पगपापहृत् ॥ सोपनीयसमस्तानिमहैनांसिद्विजोत्तमः ॥
॥ १ ॥ ब्रह्मणःपदमाप्नोतियद्गत्वाननिवर्तते ॥ विनाश्राद्धंप्रमादाद्वाजपंकुर्युरिमंयदि ॥ स्मरणादेवतद्विष्णोःपदमाप्नोतिवैश्रुतिः ॥ २ ॥
तद्विष्णोरितिमंत्रोयंस्मर्तव्यःसर्वकर्मसु ॥ आवर्त्यःप्रणवोवापिसर्वस्यादिर्यतोहिसः ॥ ३ ॥ अभ्यसेत्प्रणवंनित्यमेकचित्तःसमाहितः ॥
गायत्रींचसदादेवीमभ्यस्यन्मुक्तिमाप्नुयात् ॥४॥ वैदिकंतुनपंकुर्यात्पौराणंपंचरात्रकम् ॥ योवेत्तितानिचैतानियान्येतानिचसाश्रुतिः ॥५॥
जपेनयेनेहकृतेनपुंसोददातिमार्गंसवितापिकर्तुः ॥ अयंहिसर्वेष्टिकृतांवरिष्ठोविधिःपदंयास्यतिनिर्विकल्पम् ॥ ६ ॥ यदुक्तंसर्वशास्त्रेषुत
थासर्वश्रुतिष्वपि ॥ उपनिषन्मतंतद्वोविप्राह्येतत्प्रकीर्तितम् ॥ ७ ॥ न्यासंतनुत्रंनववंधदेहजग्राहनोंकारमसिंसुतीक्ष्णाम् ॥ विप्रोवशंयस्त्रिप
दांनचक्रेलोकेसुरुष्टःकिमुकस्यकुर्यात् ॥ ८ ॥ तस्योद्देशोमयाप्रोक्तोविधिर्जाप्यस्यपावनः ॥ देवार्चनविधानंतुसंप्रवक्ष्याम्यतःपरम् ॥
॥ १०९ ॥ ॥ इतिबृहत्पाराशरीयेधर्मशास्त्रेद्वितीयोऽध्यायेजपविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ देवार्चनमहंवक्ष्येयदुक्तंमुनिभिःपुरा ॥ वैदिकैरेवतन्मंत्रैर्यस्ययैस्तस्यतैरपि ॥ १ ॥ अर्चयन्वैदिकैर्मंत्रैर्नानुग्रहमुपेक्षते ॥ वैदिकैर्नुग्र
ग्रहस्तस्यकिंवेदादधिकंपरम् ॥ २ ॥ ब्रह्माणंवैधसैर्मंत्रैर्विष्णुंस्वैःशंकरंस्वकैः ॥ अन्यानपितथादेवानर्चयेन्निजमंत्रकैः ॥ ३ ॥ मंत्र
न्यासंपुराकृत्वास्वदेहेदेवतासुच ॥ गायत्र्याकारन्यस्तांग्रःपूजयेद्विष्णुमव्ययम् ॥ ४ ॥ विन्यस्यव्याहृतीःसर्वाःप्रोक्तस्थानक्रमेणतु ॥
ब्रह्मीभूतःशुचिःशांतोदेवयागमुपाचरेत् ॥ ५ ॥ विष्णुरादिरयंदेवःसर्वामरगणार्चितः ॥ नामग्रहणमात्रेणपापराशिंछिनत्तियः ॥ ६ ॥

पट्स्वामीषुहरेःसम्यगर्चनंमुनिभिःकृतम् ॥
तदर्चनंप्रवक्ष्यामिविष्णोरमिततेजसः ॥ तज्ज्ञात्वामुनयःसर्वेविष्णोःसायुज्यमाप्नुयुः ॥ ७ ॥ प्रतिमास्वल्पबुद्धीनांयोगिनांहृदयेहरिः ॥
अप्स्वग्नौहृदयेसूर्येस्थंडिलेप्रतिमासुच ॥ ८ ॥ अग्नौक्रियावतांदेवोदिविदेवोमनीषिणाम् ॥ दद्यात्पुरुषसूक्तेनआपःपुष्पाणिचैव
॥ ९ ॥ आपोह्यायतनंतस्यतस्मात्तासुहरिःसदा ॥ सर्वगत्वेनविष्णोस्तुस्थंडिलेभावितात्मनाम् ॥ १० ॥ पुरुषोयोजगद्बीजमृषिर्नारायणःस्मृतः ॥ १२ ॥
हि ॥ अर्चितंस्यादिदंतेनविश्वंभुवनसप्तकम् ॥ ११ ॥ आनुष्टुभस्यसूक्तस्यत्रिष्टुभंतस्यदेवतम् ॥ हस्तन्यासंतथाकृत्वास्मृत्वाविष्णुंतथाव्य
तस्यसूक्तस्यसर्वस्यऋचांन्यासंयथाविधि ॥ देवेचैवात्मनियथासंप्रवक्ष्याम्यतःपरम् ॥ १३ ॥ तृतीयांवामपादेतुचतुर्थींदक्षिणे
यम् ॥ शिखाबंधंचदिग्बंधंसंचिंत्यविष्णुमात्मनि ॥ १४ ॥ विन्यसेत्प्रथमांवामेद्वितीयांदक्षिणेकरे ॥ नवमींनाभिमध्येतुदशमीं
न्यसेत् ॥ १५ ॥ पंचमींवामजानौतुषष्ठींदक्षिणतोन्यसेत् ॥ सप्तमींवामकट्यांचदक्षिणस्यांतथाष्टमीम् ॥ १६ ॥ अक्ष्णोःपंचदशींकृत्वाषोड
हृदयेन्यसेत् ॥ एकादशींवामबाहौद्वादशींदक्षिणेन्यसेत् ॥ १७ ॥ कंठेत्रयोदशींन्यस्यतथावक्त्रेचतुर्दशीम् ॥ व्याहृतीनामथ
शींमूर्ध्निविन्यसेत् ॥ १८ ॥ एवंन्यासविधिंकृत्वापश्चाद्यागंसमाचरेत् ॥ आसनंचिंतयेन्मेरुमष्टपत्रंसकर्णिकम् ॥ १९ ॥ जनलोकंतु
न्यासंतंकुर्याद्विधिवद्द्विजः ॥ भूर्लोकंपादयोर्न्यस्यभुवर्लोकंतुजानुनोः ॥ २० ॥ स्वर्लोकंकटिदेशेतुनाभिदेशेमहस्तथा ॥ तच्चक्षु
हृदयेकंठदेशेतपस्तथा ॥ २१ ॥ भ्रुवोर्ललाटसंध्योस्तुसत्यलोकःप्रतिष्ठितः ॥ हिरण्मयेपरेनित्यविरजंब्रह्मनिष्कलम् ॥ २२ ॥ अन्य
भंज्योतिषांज्योतिस्तद्यदात्मविदोविदुः ॥ आवाहनमथप्राहविष्णोरमिततेजसः ॥ यथार्चाक्रियतेतत्रस्वदेहेचिंतयेत्तथा ॥ २३ ॥ चतुर्थ्यार्घं
यावाहयेद्देवमृचात्रपुरुषोत्तमम् ॥ यथादेहेतथादेवेन्यासंकुर्याद्विधानतः ॥ २४ ॥ द्वितीययासनंदद्यात्पाद्यंचैवतृतीयया ॥

प्रदातव्यःपंचम्याचमनंतथा ॥ २५ ॥ षष्ठ्यास्नानंप्रकुर्वीतसप्तम्यावसनंतथा ॥ यज्ञोपवीतंचाष्टम्यानवम्यागंधलेपनम् ॥ २६ ॥ पुष्पं
देयंदशम्यातुएकादश्याचधूपयेत् ॥ द्वादश्यादीपकंदद्यात्त्रयोदश्यानिवेद्यकम् ॥ २७ ॥ चतुर्दश्यांजलिंकुर्यात्पंचदश्यांप्रदक्षिणाम् ॥ षोड
श्योद्वासनंकुर्याच्छेषंकार्याणिपूर्ववत् ॥ २८ ॥ स्नानेवस्त्रेचनैवेद्येदद्यादाचमनंहरेः ॥ षण्मासात्सिद्धिमाप्नोतियोर्चयेदेवमेवहि ॥ २९ ॥
आदित्यमंडलेदेवंध्यात्वाविष्णुमनामयम् ॥ सयातिब्रह्मणः स्थानंनात्रकार्याविचारणा ॥ ३० ॥ ध्येयःसदासवितृमंडलमध्य
वर्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ ३१ ॥ सूक्तेनविष्णुवि
धिनासमुदीरितेनयोनेननित्यमजमादिमनंतमूर्तिम् ॥ भक्त्यार्चयेत्पठतियश्चसविष्णुदेहंविप्रोविशेद्धरिवरेणकृतार्धदेहः ॥ ३२ ॥ पंच
रात्रविधानेनस्थंडिलेवापिपूजयेत् ॥ जलमध्यगतोवापिपूजयेज्जलमध्यतः ॥ ३३ ॥ द्वादशारंनवव्यूहंपंचतत्त्वक्रमेणतु ॥ अभा
वेधौतवस्त्रस्यपत्रिकायास्तथाद्विजः ॥ ३४ ॥ जलेपिहिजलेनैवमंत्रैरेवार्चयेद्धरिम् ॥ विष्णुंविष्णिवत्यजस्त्रंतुचिंतयेद्धरिमेवतु ॥ ३५ ॥
व्रजंस्तिष्ठंस्तथासीनःशयानोपिसदाहरिम् ॥ संस्मरेन्नाशुभंकिंचिदिहामुत्रभवेन्नृणाम् ॥ ३६ ॥ रुद्रंरुद्रविधानेनब्रह्माणंचविधानतः ॥
सूर्यसंहितमंत्रैश्चतदीरितविधानतः ॥ ३७ ॥ दुर्गांकात्यायनींदेवींतथावाग्देवतामपि ॥ स्कंदंविनायकंचैवयोगिनीक्षेत्रपालकान् ॥
॥ ३८ ॥ विधिवत्पूजयेत्सर्वान्योविप्रोभक्तितत्परः ॥ विष्णुनासुप्रसन्नेनविष्णुलोकमवाप्नुयात् ॥३९॥ ग्रहांश्चपूजयेत्पश्चाद्ब्राह्मणः शांतित
त्परः ॥ आरोग्यपुष्टिसंयुक्तोदीर्घमायुरवाप्नुयात् ॥ ४० ॥ ग्रहागावोनृपाविप्राःसद्भिःपूज्याःसदानरैः ॥ पूजिताःपूजयंत्येतेनिर्दहंत्यपमानि
ताः ॥ ४१॥ योहितःसर्वसत्त्वेषुनृपगोब्राह्मणेषुच ॥ इहामुत्रचपूज्योसौविष्णुलोकमवाप्नुयात् ॥४२॥उक्तोगृहस्थस्यसुरार्चनस्यधन्योविधि

विष्णुपदोपलब्धौ ॥ कुर्याद्द्विजातिः प्रतिवासरंयोवेदोक्तमंत्रैः समयाहिताय ॥४३॥ देवपूजाविधिःप्रोक्तएषतूद्देशतोमया ॥ वैश्वदेवस्यवक्तव्यः
पुण्योविधिर्मयाधुना ॥४४॥ इति श्रीबृहत्पराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांद्वितीयेऽध्यायेदेवपूजाविधिः ॥ ॥वैश्वदेवंप्रवक्ष्यामियथाका
र्योद्विजातिभिः ॥ स्वगृह्योक्तविधानेनजुहुयाद्वैश्वदेविकम् ॥ १ ॥ हविष्यस्यद्विजोभावेयथालाभंशृतंहविः ॥ जुहुयाद्विधिवद्भक्त्यायथा
स्याच्चित्तनिर्वृतिः ॥ २ ॥ यद्वातद्वापिहोतव्यमग्नौकिंचिद्द्विजातिभिः ॥ फलंवायदिवामूलंवासंदारुतथापयः ॥ ३ ॥ अहुत्वान
द्विजोऽश्नीयात्किञ्चित्स्वयमाशृतम् ॥ अश्नीयाच्चेदहुत्वापिनरकंप्रतिपद्यते ॥ ४ ॥ जुहुयाद्व्यंजनमक्षारलवणमन्नंहुताशने ॥ अनुज्ञातो
द्विजस्तैस्तुत्रिःकृत्वःपुरुषर्षभः ॥ ५ ॥ यत्राग्नौहूयतेनैवयस्यवान्नंनदीयते ॥ अभोज्यंतद्द्विजातीनांभुक्त्वाचांद्रायणंचरेत् ॥ ६ ॥
लौकिकेवैदिकेवापिवैश्वदेवोहिनित्यशः ॥ लौकिकेपापनाशायवैदिकेस्वर्गमाप्नुयात् ॥ ७ ॥ अभावादग्निहोत्रस्यतथाचावसथस्यच ॥
यस्मिन्नग्नौपचेदन्नंतत्रहोमोविधीयते ॥ ८ ॥ अग्निःसोमःसमस्तौनौविश्वेदेवास्तथैवच ॥ धन्वंतरिःकुहूस्तद्वदनुमतिःप्रजापतिः ॥ ९ ॥ द्या
वाभूम्योःस्विष्टकृतेहुत्वैतेभ्यःपुनस्त्वतः ॥ कुर्याद्बलिंततःपश्चात्सर्वदिक्षुप्रदक्षिणम् ॥ १० ॥ सुत्राम्णेतैस्यपुंभ्यश्चयमायचसहानुगैः ॥
वरुणायसहैतैस्तुसोमायचसहानुगैः ॥ ११ ॥ मरुद्भ्यश्चक्षिपेद्द्वारिअश्विभ्यश्चतथाहरेत् ॥ वनस्पतिभ्यःसर्वेभ्योमुसलोलूखलेहरेत् ॥
॥ १२ ॥ श्रियैचभद्रकाल्यैचउच्छीर्षेपादयोःक्रमात् ॥ ब्रह्मणसानुगायेतिमध्येचैवबलिंहरेत् ॥ १३ ॥ वास्तवेसानुगायेतिवास्तु
मध्येबलिंहरेत् ॥ विश्वेभ्यश्चैवदेवेभ्योबलिमाकाशमुत्क्षिपेत् ॥ १४ ॥ द्युचरेभ्यश्चभूतेभ्योनक्तंचारिभ्यएवच ॥ वास्तोःपृष्ठेचकुर्वी
तबलिंसर्वानुपूर्तये ॥ १५ ॥ पितृभ्योबलिशेषंतुसर्वंदक्षिणतोहरेत् ॥ पतितेभ्यःश्वपाकेभ्यःपाप्मानांपापरोगिणाम् ॥ १६ ॥

कृमिकीटपतंगानांसर्वेभ्योपिबलिंहरेत् ॥ एवंसर्वाणिभूतानियोविप्रोनित्यमर्चयेत् ॥ १७ ॥ सतस्थानंपरमाप्नोतियज्ज्योतिः
परिवेधसः ॥ गृह्येग्नौवैश्वदेवंतुप्रोक्तमेतन्मनीषिभिः ॥ अनग्निकस्तुकुर्वीतवैश्वदेवंकथंत्विति ॥ १८ ॥ महाव्याहृतयस्तिस्रःसमस्तप्रभि
स्तथापरा ॥ इत्याहुतीश्चतस्रस्तुतथादेवकृतेतिच ॥ १९ ॥ त्र्यंबकंयजामहइत्यादिचाहुतिद्वयम् ॥ वैश्वदेवेचजुहुयाद्विशेषोन्यत्रवैपुनः
॥ २० ॥ अल्पमृत्युनिवृत्त्यर्थमायुःपुष्टिविवृद्धये ॥ जुहुयात्त्र्यंबकंदेवंबिल्वपत्रैस्तिलैस्तथा ॥ २१ ॥ विनायकायहोतव्योघृतंस्याहुत
यस्तथा ॥ सर्वविघ्नोपशांत्यर्थंपूजयेद्यत्नतस्तुतम् ॥ २२ ॥ गणानांत्वेतिमंत्रेणस्वाहाकारांतमाहृतः ॥ चतस्रोजुहुयात्तस्मैगणेशायत
थाहुतीः ॥ २३ ॥ तद्विष्णोरितिजुहुयाद्विधेःसंपूर्णताकृते ॥ प्रणवेनचगायत्र्याकेचिज्जुह्वतितांद्विजाः ॥ २४ ॥ एतौहिसर्वदेवत्यौ
तत्परंनतुकिंचन ॥ एताभ्यांचहुतेनैवसर्वेभ्योपिहुतंभवेत् ॥ २५ ॥ जुहुयात्सर्पिषाभक्तंगव्येनपयसातथा ॥ कीर्तिनगोविकारेणतिल
तैलेनवापुनः ॥ २६ ॥ संप्रोक्ष्यपयसावापिनाभ्यक्तंनाहुयादपि ॥ निःस्नेहायवगोधूमशालयोहवनीयकाः ॥ २७ ॥ हविस्त्वहविर
भ्यक्तमहविस्तुहविर्यतः ॥ अभ्यक्तमेवहोतव्यमतोरूक्षंविवर्जयेत् ॥ दारिद्र्यंश्वित्रितामेकेरूक्षान्नहवनेविदुः ॥ २८ ॥ जठराग्नौक्षयंचेके
रूक्षमन्नेनहूयते ॥ ओंकारपूर्विकाःसर्वाःस्वाहाकारांतिकास्तथा ॥ २९ ॥ जुहुयादग्निकोविप्रोगृहमेधीहिनित्यशः ॥ बलिंचोपांतभूतेभ्यः
सर्वेभ्योप्यविशेषतः ॥ ३० ॥ हुत्वातुकृष्णवर्त्मानंकृतांजलिःप्रसादयेत् ॥ त्वमग्नेद्युभिरेतेनमंत्रेणभक्तिमान्द्विजः ॥ आब्रह्मन्नितिमंत्रं
तुजपेद्वैसर्वकामिकम् ॥ ३१ ॥ अहाव्यग्नेइतिह्येनंमंत्रंचप्रयतोजपेत् ॥ अन्यंहोताशनंमंत्रंजपित्वातुप्रसादयेत् ॥ ३२ ॥ ॥१४॥
अन्यानिचैवसूक्तानिपवित्राणिततोजपेत् ॥ सर्वशांतिककृत्यर्थंतथाग्निर्देवतेतिच ॥ ३३ ॥ ज्ञानंधनमरोगित्वंगतिमिच्छंस्तथाद्विजः ॥

शंभुमग्निंरविंविष्णुमर्चयेद्भक्तितःक्रमात् ॥ ३४ ॥ अजानन्योद्विजोनित्यमहुत्वात्तिशृतंहविः ॥ पितृदेवमनुष्याणामृणयुक्तःसयात्य
धः ॥ ३५ ॥ शाकंवापितृणंवापिहुत्वाग्नावश्नुतेद्विजः ॥ सर्वकामसमायुक्तःसोत्रापिसुखमश्नुते ॥ ३६ ॥ स्वरेणवर्णेनचयद्विहीनंमंतृथैवंहीनं
क्रिययापियच्च ॥ तथातिरिक्तंममतत्क्षमस्वतदस्तुचास्तेपरिपूर्णमेतत् ॥ ३७ ॥ सर्वपापापनोदायसर्वकामफलायच ॥ द्विजन्मनां
हितार्थायवैश्वदेवमुदीरितम् ॥ ३८ ॥ ॥ इ० बृह० द्वि० वैश्वदेवविधिः ॥ ॥ अथातिथ्यंप्रवक्ष्यामिचातुर्वर्ण्यफलप्रदम् ॥
चातुर्वर्ण्येऽतिथिःप्रोक्तःकालप्राप्तोऽध्वगोश्रुतः ॥ १ ॥ अदृष्टोश्रुतपूर्वादिरज्ञाताचारविद्यकः ॥ संध्यामात्रकृताचारस्तज्ज्ञैःसोऽतिथिरुच्य
ते ॥ २ ॥ क्षुत्तृष्णाध्वपरिश्रांतःप्राणत्राणान्नयाचकः ॥ गृहीतपात्रमात्रःसन्गृहद्वारमुपागतः ॥ ३ ॥ विष्णुरूपोतिथिःसोयमुत्तारार्थमु
पागतः ॥ इतिमत्वामहाभक्त्यावृणुयाद्भोजनायतम् ॥ ४ ॥ त्वंपुण्येनममायातःसर्वदेवमयोऽतिथिः ॥ निर्दह्यसर्वपापानिममाप्ययंसंप्रया
स्यति ॥ ५ ॥ ब्राह्मणैःसहभोज्योसौभक्त्याप्रक्षाल्यपादयम् ॥ आसनार्चादिकंदत्वाकृत्वास्रक्चंदनादिकम् ॥ ६ ॥ योगिनोविविधै
रूपैर्भ्रमंतिधरणीतले ॥ नराणामुपकारायतेचाज्ञातस्वरूपिणः ॥ ७ ॥ तस्मादभ्यर्चयेत्प्राप्तंश्राद्धकालेतिथिंद्विजः ॥ श्राद्धक्रियाफलं
हंतितत्रैवापूजितोतिथिः ॥ ८ ॥ तस्मादपूर्वमेवात्रपूजयेदागतातिथिम् ॥ क्वापिकदाचिदागच्छेत्तारयेयस्तुपूर्वजान् ॥ ९ ॥ यतिर्व्रत्य
ग्निहोत्रीचतथाचमस्कृद्विजः ॥ सदैतेतिथयःप्रोक्ताअपूर्वाश्चदिनेदिने ॥ १० ॥ अतिथेऽमरदेहत्वंमत्तारार्थमिहागतः ॥ संसारपंकम
ग्नंमामुद्धरस्वाघनाशनः ॥ ११ ॥ नैकाश्रमेवसन्विप्रोमुनीन्द्रैरुच्यतेतिथिः ॥ अन्यत्रपूर्वदृष्टोयोनासावतिथिरुच्यते ॥ १२ ॥ क्षत्रियो
पियथागच्छेदतिथित्वेनवेश्मनि ॥ भुक्तेषुसत्सुविप्रेषुकामतस्तुतमाशयेत् ॥ १३ ॥ वैश्योवायदिवाशूद्रोविप्रगेहंसमाव्रजेत् ॥ सभृ

त्यैःसहभोक्तव्यइतिपाराशरोब्रवीत् ॥ १४ ॥ क्लीबोवायदिवाकाणःकुष्ठीवाव्याधितोपिवा ॥ आगतोवैश्वदेवांतेद्रष्टव्यःसर्वदेववत ॥ १५॥
क्षत्रियेणापिवैश्येनतथैववृषलेनच ॥ आतिथ्यंसर्ववर्णानांकर्तव्यंस्यादसंशयम् ॥ १६ ॥ योतिथिंपूजयेद्भक्त्यापूर्वमभ्यागतंतथा ॥
बालवृद्धादिकंचैवतस्यविष्णुःप्रसीदति ॥ १७ ॥ देवामनुष्याःपितरश्चसर्वेस्युर्येनतृप्तेनचभूरिदिष्टम ॥ तस्यान्नदातुस्त्वमरांगनाभि
स्तस्यातिथेःकेनसमत्वमस्ति ॥१८॥ ॥ इतिश्रीबृहत्पाराशरीयेधर्मशास्त्रेद्वितीयेध्यायेतिथिपूजाविधिः ॥ ॥ वर्णधर्मान्प्रवक्ष्यामियत्कृत्यं
ब्राह्मणादिभिः ॥ विप्राधर्मांद्विजास्तद्वैसंक्षेपेणपृथक्पृथक् ॥ १ ॥ यजनंयाजनंविप्रेतथादानप्रतिग्रहौ ॥ अध्यापनमध्ययनंकर्माण्ये
तानिषट्तथा ॥ २ ॥ प्रजानांरक्षणंदानमरीणांनिग्रहस्तथा ॥ यजनाध्ययनेराज्ञिविषयासक्तिवर्जनम् ॥ ३ ॥ यजनाध्ययनेदानंपा
शुपाल्यंतथाविशि ॥ वाणिज्यंचकुसीदंचकर्मषट्कंप्रकीर्तितम् ॥ ४ ॥ शुश्रूषाब्राह्मणादीनांतदाज्ञापालनंतथा ॥ एषधर्मःस्मृतः
शूद्रेवाणिज्येनतुजीवनम ॥ ५ ॥ सर्वेषांजीवनंप्रोक्तंधर्मेणैवचकर्षणम ॥ भिन्नवृत्तिर्यथानस्यात्कुर्याद्विप्रस्तथाचतत ॥ ६ ॥
कुर्वन्नुक्तानिकर्माणिवृत्त्यावाक्षत्रियस्यच ॥ वृत्त्यभावेद्विजोजीवेद्भिन्नवृत्तिंविवर्जयेत् ॥ ७ ॥ प्रजानांपालनंदानंशस्त्रवृत्तिःप्रचंडता ॥
निर्जयःपरसैन्यानामेषधर्मःस्मृतोनृपे ॥ ८ ॥ पुष्पंपुष्पंविचिन्वीतमूलच्छेदंनकारयेत् ॥ मालाकारइवाग्रामेप्रजासुस्यात्तथानृपः ॥ ९ ॥
लोहकर्मरथानांतुगवांचपरिपालनम् ॥ कुसीदकृषिवाणिज्यंवैश्यवृत्तिरुदाहृता ॥ १० ॥ शूद्रस्यद्विजशुश्रूषापरोधर्मःप्रकीर्तितः ॥
यदन्यत्कुरुतेपुण्यंतद्भवेत्तस्यनिष्फलम् ॥ ११ ॥ लवणंमधुतैलंचदधितक्रंघृतंपयः ॥ नदुष्येच्छूद्रजातीनांकुर्यात्सर्वस्यविक्रयम् ॥
॥ १२ ॥ विक्रयंमद्यमांसानामभ्यक्ष्यस्यचभक्षणम् ॥ अगम्यागामिताचौर्यंशूद्रेस्युःपातहेतवः ॥ १३ ॥ कपिलाक्षीरपानेनब्राह्मणीगम

नेनच ॥ वेदाक्षरविचारेणशूद्रस्यनरकोध्रुवम् ॥ १४ ॥ इतिश्रीबृह० धर्मशास्त्रेसुव्रतप्रोक्त० वर्णधर्मकथनंनाम द्वितीयोऽध्यायः ॥ २ ॥
अतःपरंगृहस्थस्यधर्माचारंकलौयुगे ॥ धर्मसाधारणंसाक्षाच्चातुर्वर्ण्यक्रमागतम् ॥ १ ॥ युष्माकंसंप्रवक्ष्यामिपाराशरमुखाच्छ्रुतम् ॥
षट्कर्मसहितोविप्रःकृषिवृत्तिंसमाश्रयेत् ॥ २ ॥ हीनांगंव्याधिसंयुक्तंप्राणहीनंचदुर्बलम् ॥ क्षुधितंतृषितंश्रांतमनड्वाहंनवाहयेत् ॥ ३ ॥
स्थिरांगंनीरुजंतृप्तंसांडंषंढविवर्जितम् ॥ शांतंचसबलंतृप्तंवाहयेद्वृषभंकृषी ॥ ४ ॥ वाहयेद्दिवसस्यार्धंततःस्नानंसमाचरेत् ॥ कुर्गवैर्नकु
र्यात्सर्वथाधेनुसंग्रहम् ॥ ५ ॥ बंधनंपालनंरक्षांद्विजःकुर्याद्गवांगृही ॥ वत्साश्चयत्नतोरक्ष्यावर्धनीयायथाक्रमम् ॥ ६ ॥ नदूरेतास्तु
नेतव्याश्चारणायकदाचन ॥ गावोदूरेणचरंत्योनभवंतिशुभायनः ॥ ७ ॥ प्रातरेवहिदोग्धव्यादुह्यात्सायंतनोगृही ॥ दोग्धुर्हिपयसोनैव
वर्धंतेताःकदाचन ॥ ८ ॥ अनादेयंतृणंजग्ध्वास्रवंत्यनुदिनंपयः ॥ तृप्तिदादेवतादीनांगावःपूज्याःकथंनताः ॥ ९ ॥ स्पृष्टाश्चगावःशम
यंतिपापंसंसेविताश्चोपनयंतिवित्तम् ॥ ताएवदत्तास्त्रिदिवंनयंतिगोभिर्नतुल्यंधनमस्तिकिंचित् ॥ १० ॥ यस्याःशिरसिब्रह्मास्तेस्कंधदेशे
शिवःस्थितः ॥ पृष्ठेनारायणस्तस्थौश्रुतयश्चरणेषुच ॥ ११ ॥ अन्यायादेवताःसर्वागवांलोमसुताःस्थिताः ॥ सर्वदेवमयागावस्तुष्येत्तद्भ
क्तितोहरिः ॥ १२ ॥ दहंतिस्पर्शनात्पापंपयसापोषयंतिया ॥ प्रापयंतिदिवंदत्ताःपूज्यागावःकथंनताः ॥ १३ ॥ यत्खुराहतभूमेस्तुउत्पद्यं
तेरजःकणाः ॥ प्रलीनंपातकंतैस्तुपूज्यागावःकथंनताः ॥ १४ ॥ शकृन्मूत्रंतुयस्यास्तुपीतंदहतिपातकम् ॥ किमपूज्यंहितस्यागोरिति
पाराशरोब्रवीत् ॥ १५ ॥ गौरवत्सावदोग्धव्यानतथागर्भसंधिनी ॥ प्रसूताचदशाहांवाग्दोग्धिचेन्नरकंव्रजेत् ॥ १६ ॥ दुर्बलाव्याधिताभी
ताषुष्पितायाद्विवत्सभूः ॥ साधुभिर्नैवदोग्धव्याधार्मिकैर्धनमीप्सुभिः ॥ १७ ॥ कुल्यंतेपुष्पितागावःकुलांतेवहवस्तिलाः ॥ कुलांतेचल

चित्तास्त्रीकुलांतेवंधुविग्रहः ॥ १८ ॥ एकत्रंपृथिवीसर्वासशैलवनकानना ॥ तस्यागौर्ज्यायसीसाक्षादेकत्रोभयतोमुखी ॥ १९ ॥
यथोक्तविधिनाचैतावर्णैःपूज्याःसुपूजिताः ॥ पालयन्पूजयन्नेताःप्रेत्येहचसमोदते ॥ २० ॥ दक्षिणाभिमुखामावउत्तराभिमुखाअ
पि ॥ वंधनीयास्तथाचैतानप्राक्पश्चिमतोमुखाः ॥ २१ ॥ वाजिगोवृषशालायांसुतीक्ष्णंलोहयंत्रकम् ॥ स्थाप्यंतुसर्वदांत
स्यादुःखलाघ्यविमोक्षकृत् ॥ २२ ॥ गावोदेवाःसदारक्ष्याःपाल्याःपोष्याश्चसर्वदा ॥ ताडयंतिचयेपापायेचाक्रोशंतितानराः ॥
॥ २३ ॥ नरकाग्नौत्रपच्यंतेगोनिःश्वासप्रपीडिताः ॥ सपलाशेनशुष्केणतादंडेननिवर्तयेत् ॥ गच्छगच्छेतितांब्रूयान्मामाभीरि
तिवारयेत् ॥ २४ ॥ यःसंस्मृत्यनमस्कृत्यकुर्यात्तांचप्रदक्षिणाम् ॥ प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा ॥ २५ ॥ तृणो
दकादिसंयुक्तंयोददानिगवाह्निकम् ॥ सोश्वमेधसमंपुण्यंलभतेनात्रसंशयः ॥ २६ ॥ गवांकंडूयनंधर्म्यंमोप्रदानसमंभवेत् ॥ तुल्यंगो
शतदानस्यभयतोगांप्रपातियः ॥ २७ ॥ पृथिव्यांयानितीर्थानिआसमुद्रसरांसिच ॥ गवांशृंगोदकस्यापिकलांनार्हंतिषोडशीम् ॥
॥ २८ ॥ पातकानिकुतस्तेषांयेषांगृहमलंकृतम् ॥ गोभिस्तुबालवत्साभिःसदाश्रीभिरिवस्वयम् ॥ २९ ॥ ब्राह्मणानांगवांचैवकु
लमेकंद्विधाकृतम् ॥ तिष्ठंतियत्रमंत्राश्चयत्रसंतिहवींपिच ॥ ३० ॥ गोभिर्यज्ञाःप्रवर्तंतेगोभिर्वेदाःप्रवर्धिताः ॥ गोभिर्वेदाःसमुत्तीर्णाः
सषडङ्गपदक्रमाः ॥ ३१ ॥ स्युरेतायस्ययस्याग्रेपृष्ठतोयस्यताःस्थिताः ॥ वसंतिहृदयेनित्यंतासांमध्येवसंतिये ॥ ३२ ॥ तेपुण्याः
पुरुषाःक्षोण्यांनाकलोकेपिदुर्लभाः ॥ येगोभक्तिकरानित्यंवर्षांतेयेचगोप्रदाः ॥ ३३ ॥ शृंगमूलेस्थितोब्रह्माशृंगमध्येतुकेशवः ॥ शृंगा
ग्रेशंकरंविद्यात्त्रयोदेवाःप्रकीर्तिताः ॥ ३४ ॥ तीर्थानियस्याःशृंगाग्रेस्थावराणिचराणिच ॥ सर्वदेवाःस्थितादेहेसर्वदेवमयोहिगौः ॥ ३५ ॥

कंबलाश्वतरौनागौकर्णयोस्तुव्यवस्थितौ ॥ ३६ ॥ सौरभेय्याःस्थितौतस्याश्चक्षुषोः
ललाटाग्रेस्थितादेवानासामध्येतुषण्मुखः ॥ कंबलाश्वतरौनागौकर्णयोस्तुव्यवस्थितौ ॥ ३६ ॥ सौरभेय्याःस्थितौतस्याश्चक्षुषोः
शशिभास्करौ ॥ दन्तेषुवसवश्चाष्टौजिह्वायांवरुणःस्थितः ॥ ३७ ॥ सरस्वतीचहुंकारेयमयक्षौचगंडयोः ॥ ऋषयोरोमकूपे
शशिभास्करौ ॥ दन्तेषुवसवश्चाष्टौजिह्वायांवरुणःस्थितः ॥ ३७ ॥ सरस्वतीचहुंकारेयमयक्षौचगंडयोः ॥ ऋषयोरोमकूपे
ध्रुप्रस्रावेजाह्नवीजलम् ॥ ३८ ॥ कालिंदीगोमयेतस्यादेवताअपराअपि ॥ अष्टाविंशतिदेवानांकोटयोलोमसुस्थिताः ॥ ३९ ॥ उद
रेगार्हपत्योग्निर्हृदयेदक्षिणस्तथा ॥ मुखेप्याहवनीयस्तुकुक्षौसभ्यावसथ्यकौ ॥ ४० ॥ एवंयोवर्ततेगोषुताडनक्रोधवर्जितः ॥ सपुष्टां
श्रियमाप्नोतिस्वर्गलोकेमहीयते ॥ ४१ ॥ कुलंतस्यानलंवेतपूतिगंधंनवर्जयेत् ॥ यावत्पिबतितद्बंधंतावत्पुण्यंप्रवर्धते ॥ ४२ ॥ पय
स्विनींसवत्सांयःसुशीलांतरुणींतथा ॥ गांशिवस्यालयेदद्यात्तेनदत्तंजगत्त्रयम् ॥ ४३ ॥ ॥ इतिबृहत्पाराशरीयेतृतीयेध्यायेगोमहिमा ॥
॥ उक्षाणोविधसासृष्टाःसस्यस्योत्पादनायच ॥ तैरुत्पादितसस्यैश्चसर्वमेतद्धिधार्यते ॥ १ ॥ यश्चैतान्पालयेद्यत्नाद्धर्मयेच्चैवयत्नतः ॥
जगंतितेनसर्वाणिपालितानिनसंशयः ॥ २ ॥ यावद्गोपालनेपुण्यंप्रोक्तंपूर्वमनीषिभिः ॥ उक्ष्णांचपालनेपुंसांफलंदशगुणंभवेत् ॥
॥ ३॥ जगदेतद्धृतंसर्वमनडुद्भिश्चराचरम् ॥ वृषाएवततोरक्ष्याःपालनीयाःप्रयत्नतः ॥ ४ ॥ धर्मोयंभूतलेसाक्षाद्ब्रह्मणाह्यवतारितः ॥
त्रैलोक्यधारणायालमन्नानांचप्रसूतये ॥ ५ ॥ अनायत्तानिघासानिभक्षयंतिस्वकामतः ॥ भ्रमित्वाभूतलेदूरमुक्षाणःकैर्नपूजिताः ॥
॥ ६ ॥ उत्पादयंतिसस्यानिमर्दयंतिवहंतिच ॥ आनयंतिदवीयस्तदुक्षतःकोऽधिकोभुवि ॥ ७ ॥ स्कंधेनपृष्ठचाचवहंतिभारंनाश्नं
तिकिंचिद्धनिकस्यदुःखम् ॥ स्वीयेनदेहेनपरस्यजीवान्पुष्यंतिरक्षंतिचवर्धयंति ॥ ८ ॥ धन्यास्तुगावोवसुधातलेस्मिन्विभ्रत्यमुंगोवृषगंभी
भारम् ॥ भारःपृथिव्यादशतांडितांयाएकस्यचोक्ष्णोह्यपिसाधुवाचः ॥ ९ ॥ एकेनदत्तेनवृषेणयेनभवंतिदत्ताशतसौरभेय्यः ॥ माहात्म्यपाय

धरणीसमानातस्माद्वृषात्पूज्यतमोऽस्तिनान्यः॥१०॥उत्पाद्यसस्यानितृणान्यदंतितान्येवभूयःसततंवहंति॥नभारखिन्नाःप्रवदंतिकिंचिदद्दो
वृषैर्जीवतिर्जीवलोकः॥११॥चतुर्थेऽब्देतृतीयेवायदावत्सोदृढोभवेत्॥तदानासास्यभेत्तव्यानैवप्राग्दुर्बलस्यच॥१२॥नासाभेदनकीलस्तुखा
दिरोवाथशैशवः॥ द्वादशांगुलकःकार्यस्तज्ज्ञैस्तैर्नसएवसः॥ १३ ॥शालांद्विजेंद्रावृषगोहयानांतांयाम्यदिग्द्वारवतींविदध्यात्॥सौम्याककु
प्द्वारवतींसुशोभांतिपांशमिच्छन्ध्रुवमात्मनश्च॥ १४ ॥गावोवृषावागजवाजिनोवापरेपिसर्वेपशवोद्विजेंद्राः॥ याम्यामुखाउत्तरदिङ्मुखावा
नान्याशकास्तेखलुबंधनीयाः ॥ १५ ॥ शालाप्रवेशेवृषगोपशूनांराजापियत्नाद्गजवाजिनांच ॥ होमंचसप्तार्चिषिशास्त्रयुक्त्याकुर्याद्वि
धिज्ञोद्विजपूजनंच ॥ १६ ॥ इतिबृहत्पाराशरीयेधर्मशास्त्रेतृ० ध्यायेवृषभप्रशंसा ॥ ॥ लांगलंचप्रवक्ष्यामियत्काष्ठंयत्प्रमाणतः ॥हली
षायास्तथामानंप्रतोदस्ययुगस्यच ॥ १ ॥ चत्वारिंशत्तथाचाष्टावंगुलानिकुटः स्मृतः ॥ ऊर्ध्वोधर्मंगुलैर्भद्याहलीषावेधतश्चयः ॥ २ ॥
षोडशैवतुतस्याधःषड्विंशतितथोपरि ॥ वेधस्तस्यास्तुकर्तव्यः प्रमाणेनषडंगुलः ॥ ३ ॥ अंगुलैश्चाष्टभिस्तस्माद्वेधःस्यात्प्रानिहारिकः ॥
तस्याधस्ताच्चचत्वारिसवेधश्चतुरंगुलः ॥ ४ ॥ अष्टांगुलमुरस्तस्यवेधादूर्ध्वंप्रकल्पयेत ॥ ग्रीवादशांगुणाचोर्ध्वंहस्तंग्राहीततःस्मृतः ॥
॥ ५ ॥ सापितज्ज्ञैःशुभाकार्यातद्वेधरुयंगुलोभवेत् ॥ पंचांगुलमुरस्तस्यशिरसीतिविभावनम् ॥ ६ ॥ पृथुत्वंशिरसोधार्यंतलहस्तप्रमा
णकम् ॥ अंगुलानितथाचाष्टावुरसः पृथुताभवेत ॥ ७ ॥ वेधाद्बहिःप्रतीकारंषट्त्रिंशदंगुलाभवेत् ॥ सुतीक्ष्णलोहफालास्यान्मृत्काष्ठा
दिविकारकृत ॥ ८ ॥ नसीरंक्षीरवृक्षस्यनबिल्वपिचुमंदयोः ॥ इत्यादीनांप्रकुर्वाणोननंदतिचिरंगृही ॥ ९ ॥ प्लक्षाक्षयोर्नतत्कुर्याद्रा
क्षसौकीर्तितौहितौ ॥ तयोःकाष्ठस्यतत्कुर्वन्ससस्योनश्यतेगृही ॥ १० ॥ प्रांजलाःसप्तहस्ताचचतुरस्राचवर्तुला ॥ शालादिशुभंका

ष्ठानांहलीषाविदुषांमता ॥ ११ ॥ तस्यावेधःसकर्णायाः कार्योनववितस्तिभिः ॥ नीचोच्चवृषमानेनतज्ज्ञास्तांप्रवदंतिहि ॥ १२ ॥
चतुर्हस्तंयुगंकार्यस्कंधस्थानेऽर्धचंद्रकम् ॥ मेषशृंग्याःकदंबस्यशालाद्यन्यतमस्यच ॥ १३ ॥ शम्यावेधाद्बहिःकार्यादशांगुलप्रमाणिका
तन्मानेनप्रवालीचतदंतरदशांगुला ॥ १४ ॥ प्रतोदस्त्वश्ममग्रंथिर्वैणवश्चचतुःकरः ॥ तदग्रेचापिकर्तव्यायवाकारातुलोहवत् ॥
॥ १५ ॥ हीनातिरिक्तंकर्तव्यंनैवकिंचित्प्रमाणतः ॥ कुर्यादनडुहांदैन्यादहत्यानरकंव्रजेत् ॥ १६ ॥ यथादृढंयथाशोभंवाहकस्यप्रमा
णतः ॥ भूमेश्चकर्षणायालंसीरंतज्ज्ञावदंतिहि ॥ १७ ॥ योजनंतुहलस्याथप्रवक्ष्यामियथातथा ॥ ज्येष्ठानक्षत्रसंयुक्तेपुण्येहानिविधीयते
॥ १८ ॥ अन्यत्रापिशुभेभेतुदिनेयत्रतुबध्यते ॥ शुभेराशिगतेचंद्रेतन्नकार्यंविपश्चिता ॥ १९ ॥ यत्तत्कृत्याहतंवापिपुण्यंवामनसिस्फु
रेत् ॥ तत्रविद्वान्द्विजश्रेष्ठःपुण्येहानिकरोतितत् ॥ २० ॥ मातृश्राद्धंद्विजःकुर्याद्यथोक्तविधिनागृही ॥ द्रव्यकालानुमानेनकुर्वाणोधर्मतः
कृषिम् ॥ २१ ॥ प्रोल्लिख्यमंडलंपुष्पधूपदीपैःसमर्च्यच ॥ इंद्रायचतथाश्विभ्यांमरुद्भ्यश्चतथाद्विजः ॥ २२ ॥ कुर्याद्बलिहुतिंविद्वा
न्दुग्धान्नंकश्यपायच ॥ तथाकुमार्यैसीतायैअनुमत्यैतथाबलिम् ॥ २३ ॥ नमःस्वाहेतिमंत्रेणसर्वांछन्नात्मनःशुभम् ॥ दधिगंधाक्षतैः
पुष्पैः शमीपत्रैस्तिलैस्तथा ॥ २४ ॥ दद्याद्बलिंवृषाणांतुमध्वाज्यप्राशनंतथा ॥ संघृष्यसीरफालाग्रंहेम्नावारजतेनवा ॥ २५ ॥
प्रलिप्यमधुसर्पिर्भ्यांतत्कुर्वीतप्रदक्षिणम् ॥ अभ्युक्ष्णमंडलंकृत्वाकुर्यात्सीरप्रवाहणम् ॥ २६ ॥ पुण्यंलांगलकल्याणंकल्याणायन
मोस्त्विति ॥ सीतायाःस्थापनंकृत्वापराशरमृषिंस्मरन् ॥ २७ ॥ सीरायुंजंतिइत्याद्यैर्मंत्रैःसीरंप्रवाहयेत् ॥ दधिदूर्वाक्षतैःपुष्पैः
शमीपत्रैःशुभप्रदैः ॥ २८ ॥ सीतांपूज्यवृषौभक्त्यारक्तवस्त्रवृषाणकौ ॥ सप्तधान्यानिचादायप्रोक्ष्यपूर्वामुखोहली ॥ २९ ॥ उक्ष्णाःक्षेत्र

तानिदत्वाकिरन्भूमिंकृषेद्विजः ॥ नैतिलैर्नयवैर्हीनंद्विजःकुर्वीतकर्षणम् ॥ ३० ॥ तद्विहीनंप्रकुर्वाणंनप्रशंसंतिदेवताः ॥ तिलपत्राच्युतं
तोयंदक्षिणस्यांपतेद्दिशि ॥ तृप्यंतिपितरस्तेनयावन्नातिलविक्रयः ॥ ३१ ॥ विक्रीणीतितिलान्यस्तुमुक्तान्यद्धान्सश्यामकान् ॥ प्रमु
च्यपितरस्तंतुप्रयांतिहितिलैःसह ॥ ३२ ॥ तुषाज्जलंयवस्थंतुपत्रेभ्योभूतलेपतेत् ॥ पयोदधिघृताद्यैस्तुतर्पयेत्सर्वदेवताः ॥ ३३ ॥ दैवपर्ज
न्यभूसीरयोगात्कृषिःप्रजायते ॥ व्यापारात्पुरुषस्यापितस्मात्तत्रोद्यतोभवेत् ॥ ३४ ॥ शालीक्षुशणकार्पासव्रातांकृप्रभृतीनिच ॥ व्रापये
त्सर्वबीजानिसर्वंचापिनसीदति ॥ ३५ ॥ चंद्रक्षयेतिथौविप्रोयोयुनक्तिवृषंक्वचित् ॥ तंपंचदशवर्षाणित्यजंतिपितरोहितम् ॥ ३६ ॥
चंद्रक्षयेद्विजोविद्वान्योभुंनक्तिपराशनम् ॥ भोक्तुर्मासार्जितंपुण्यंभवेद्दशनदस्यतत् ॥ ३७ ॥ चन्द्रार्कयोस्समायोगेनरस्तंवादिकृंतनम् ॥ तत्प
र्णसंख्ययातस्यभ्रूणहत्यानसंशयः ॥ ३८ ॥ चंद्रार्कयोस्समायोगेयकुर्यात्स्त्रीनिषेवणम् ॥ स्युःशुक्रभोजिनस्तस्यतंमासंपितरोहताः ॥ ३९ ॥
वंनस्पतिगतेसोमेयोध्वानंगच्छतिद्विजः ॥ प्रभ्रष्टद्विजकर्माणंतंत्यजंत्यमरादयः ॥ ४० ॥ वासांसिंदुप्रणाशेतुरजकस्यांतिकेक्षिपेत् ॥
पिबंतिपितरस्तस्यमासंवस्त्रमलांबुतत् ॥ ४१ ॥ सोमक्षयेद्विजोयात्तत्यक्त्वान्यंयस्तुवाशनम् ॥ सदेवपितृशापाग्निदग्धोनरकमावसे
त् ॥ ४२ ॥ अष्टमीकामभोगेनषष्ठीतैलोपभोगतः ॥ कुहूश्चदंतकाष्ठेनहिनस्त्यासप्तमंकुलम् ॥ ४३ ॥ चंद्राप्रतीतौपुरुषस्तदेवादद्यादम
त्यायदिदंतकाष्ठम् ॥ ताराधिनाथःस्वदितस्तुतेनघातःकृतःस्यात्पितृदेवतानाम् ॥ ४४ ॥ तत्राभ्यज्य विषाणानिविषाणांचगवामपि ॥
चरणार्थविसृज्यंतेआगतान्निशिभोजयेत् ॥ ४५ ॥ उत्पाद्ययेत्रसस्यानिसर्वाणितृणचारिणः ॥ जगत्सर्वधृतंयैस्तुपूज्यंतेकिंनतेवृषाः ॥
॥ ४६ ॥ येनैकेनप्रदत्तेनदत्तंगोदशकंभवेत् ॥ यद्रूपेणस्थितोधर्मःपूज्यंतेकिंनतेवृषाः ॥ ४७ ॥ पाल्यास्तेयत्नतोनित्यंवाहनीयायथा

विधि ॥ सयातिनरकंघोरंयोवाहयेदपालयन् ॥ ४८ ॥ नाधिकांगोनहीनांगःपुष्पितांगोनदूषितः ॥ वाहनीयोनशूद्रेणवाहयन्क्षयमश्नुते
॥ ४९ ॥ वर्जयेदष्टदोषांस्तुवाहनेदोहनेनरः ॥ पाल्यास्तेयत्नतःसर्वेपालयञ्छुभमाप्नुयात् ॥ ५० ॥ अन्नार्थंवृषभान्स्रष्टाससर्जपरमेश्व
रः ॥ अन्नेनाप्यायतेसर्वंत्रैलोक्यंसचराचरम् ॥५१॥ अग्निर्ज्वलतिचान्नार्थंवातिचान्नायमारुतः ॥ गृह्णातिचांभसांसूर्योरसानन्नायरश्मिभिः॥
॥५२॥अन्नंप्राणाबलंचान्नमन्नंजीवितमुच्यते ॥ अन्नंचजगदाधारंसर्वमन्नेप्रतिष्ठितम् ॥५३ ॥ सर्वेषांदेवतादीनामन्नंजीवःप्रकीर्तितः ॥ तस्मा
दन्नात्परंतत्त्वंनभूतंनभविष्यति ॥ ५४ ॥ द्यौःपुमान्धरणीनारीबीजमंभोदिवश्च्युतम् ॥ द्युधात्रीतोयसंयोगादन्नादीन्यंहिसंभवः ॥५५॥ मूल
मापोहिसर्वस्यसर्वमप्सुप्रतिष्ठितम्॥आपोमृतंरसोह्यापआपःशुक्रंबलंमहः ॥ ५६ ॥ बीजमापोहिसर्वस्यसर्वमाद्भिःसमावृतम्॥सद्यआप्यायना
दापआपोज्येष्ठतरास्ततः॥५७ ॥किंचित्कालंविनाप्यन्नंजीवंतिमनुजादयः॥नजीवंतिविनाताभिस्तस्मादापोऽमृतंस्मृताः॥ ५८॥दत्ताभिर
द्भिरतस्मात्किनदत्तंकलौयुगे ॥ तथान्नेनप्रदत्तेनसर्वंदत्तंभवेदिह ॥ ५९ ॥ अतोप्यन्नार्थभावेनकर्तव्यंकर्षणंद्विजैः ॥ यथोक्तेनविधानेनलां
गलादिप्रयोजनम् ॥ ६० ॥ सीतेसौम्येकुमारित्वंदेवलक्ष्मिसुरार्चिते ॥ शक्तिमूर्नोर्यथासिद्धातथामेसिद्धिदाभव ॥ ६१ ॥ शक्तिमूर्नोर्वि
नानाम्नासीतायाःस्थापनंविना ॥ विनाभ्युक्षणरक्षाभ्यांसर्वंहरतिराक्षसः ॥ ६२ ॥ वापनेलवनेमर्देखलेधान्यप्रवाहणे ॥ एषएववि
धिर्ज्ञेयोधान्यानांचप्रवेशने ॥ ६३ ॥ देवतायतनंयानंनिपानस्थानगोत्रजान् ॥ सीमांश्मशानभूमिंचवृक्षच्छायाक्षितितथा ॥ ६४ ॥
भूमिनिखातयूपांचचयनस्थानमेवच ॥ अन्यामपिहिनिर्वाह्यांनकृपत्कृपिकृद्बुधम् ॥ ६५ ॥ नोषरांवाहयेद्भूमिंनचाश्मशर्करावृता
म् ॥ नगोचरांनप्रदत्तांनमर्दांपुलिनंतथा ॥ ६६ ॥ यद्यसौवाहयेल्लोभाद्दर्पान्मत्सरतोपिच ॥ क्षीयतेसौचिरात्पापैःसपुत्रपशुबां

धवः ॥ ६७ ॥ तामिस्रंनरकंघोरंपापीयान्यातिनिश्चितम् ॥ योहृत्वापरकीयांतांकृषिकृद्वाहयेद्ध्रुवम् ॥ सभूमिस्तेयपापेनसुचिरंन
रकेवसेत् ॥ ६८ ॥ एकसंख्यमपिस्वर्णभूमिमंगुलमात्रिकाम् ॥ तथैकामपिगांहृत्वामृष्टचंतंनरकेवसेत् ॥ ६९ ॥ नदूरेवाह्वये
त्क्षेत्रंनचैवात्यंतिकेतथा ॥ नवाहयेत्पथिक्षेत्रंवाहयन्दुःखितःसदा ॥ ७० ॥ क्षेत्रेष्वेवंवृतिंकुर्याद्यामुष्ट्रोनविलोकयेत् ॥ नलंघयेत्प
शुर्नाश्वोनभिद्याद्यांचशूकरः ॥ ७१ ॥ वंधाश्चयत्नतःकार्यामृगादित्रासनायच ॥ तथाप्युपद्रवंराजावस्कारादिसमुद्भवम् ॥ ७२ ॥
संरक्षेत्सर्वतोयत्नःयस्माद्धृह्णात्यसौकरान् ॥ कृषिकृन्मानवस्त्वेवंमत्वाधर्मकृपद्धराम् ॥ अनवद्यांशुभांस्निग्धांजलावगाहनक्षमा
म् ॥ ७३ ॥ यस्यांवाहयेन्निम्नांयत्रतोयंस्थिरीभवेत् ॥ वाहयेत्सलिलात्पर्णमवृष्टौसेकसंभवः ॥ ७४ ॥ शारद्यमुच्चकेभूमौकं
ग्वाद्यंवापयेद्बलीन् ॥ अधित्यकासुकार्पासंवदंत्यत्रतुहैमजम् ॥ ७५ ॥ वासंतंग्रैष्मकालीयंवाप्यंस्निग्धेषुतद्विदुः ॥ केदारेषुतथा
शालोजलोपांतेषुचेक्षवः ॥ ७६ ॥ मूलवृंताकशाकानिकंदलानिजलांतिके ॥ विश्रांतवृष्टिपानीयेक्षेत्रेष्वेवंयवादिकम् ॥ ७७ ॥
गोधूमांश्चनमूराश्चखल्वाःखलकुशास्तथा ॥ समास्तेषुचतेवाप्याधान्यान्यन्यानियोगतः ॥ ७८ ॥ कुलत्थामुद्गमाषाश्चराजेमाषा
दिकास्तथा ॥ वाप्याभूमिविशेषेतुभूमिजैरेवंविजानता ॥ ७९ ॥ तिलाबहुविधावाप्याअंतसीशणमेवच ॥ मृदंबुयोगजंसर्वंवाप
येत्कृषिकृन्नरः ॥ ८० ॥ संपश्यन्चरतःसर्वान्गोवृषादीन्स्वयंगृही ॥ चिंतयेत्सममात्मीयान्स्वयमेवकृषिंव्रजेत् ॥ ८१ ॥ प्रथमं
कृषिवाणिज्यंद्वितीयंपशुपालनम् ॥ तृतीयंक्रीतविक्रीतंचतुर्थंनृपसेवनम् ॥ ८२ ॥ नखैर्विलिखनेयस्याःपापमाहुर्मनीषिणः ॥
तस्याःसीरविदारणेकिन्नपापंक्षितेर्भवेत् ॥ ८३ ॥ तृणकच्छेदमात्रेपिप्रोच्यतेक्षयमायुषः ॥ असंख्यकंदानिर्नाशादसंख्यातंभवेद

घम् ॥ ८४ ॥ यद्वर्षैमत्स्यबंधानांतथासंकरिणामपि ॥ अंहःकुघट्टिकानांचतद्दिनेकृषिकारिणाम् ॥ ८५ ॥ एकाहेघातकानां
चयत्पापंमृगयोरपि ॥ कदर्याणांचयत्पापंतद्दिनेकृषिजीविनाम् ॥ ८६ ॥ वर्णानांचगृहस्थानांकृषिवृत्त्युपजीविनाम् ॥ तदेनसो
विशुध्यर्थंप्राहसत्यवतीपतिः ॥ ८७ ॥ द्वादशोनवमोवापिसप्तमःपंचमोपिवा ॥ धान्यभागःप्रदातव्यःसीरिणाखलकेध्रुवम् ॥ ८८ ॥
अस्मर्यव्यूढभूमौचविंशांशंक्षेत्रभुग्भवेत् ॥ एकैकांशायकर्षःस्याद्यावद्दशमसप्तमौ ॥ ८९ ॥ ग्रामेशस्यनृपस्यापिवर्णिभिःकृषिजी
विभिः ॥ सस्यभागःप्रदातव्योयतस्तौबलिभागिनौ ॥ ९० ॥ ब्राह्मणस्तुकृषिंकुर्वन्वाहयेदिच्छयाधराम् ॥ नकिंचित्कस्य
चिदद्यात्ससर्वस्यप्रभुर्यतः ॥ ९१ ॥ ब्रह्मावैब्राह्मणानास्यात्प्रभूनसृजदादितः ॥ तद्रक्षणायबाहुभ्यांमसृजत्क्षत्रियानपि ॥
॥ ९२ ॥ पाशुपाल्याशनोत्पत्त्याऊरुभ्यांचतथाविशः ॥ द्विजदास्यायपुण्यायपद्भ्यांशूद्रमकल्पयत् ॥ ९३ ॥ यत्किंचिज्जगतिह्यत्र
भूहेमाश्वजगादिकम् ॥ स्वभावेनहिविप्राणांब्रह्मास्वयमकल्पयत् ॥ ९४ ॥ ब्राह्मणश्चैवराजाचद्वावप्येतौधृतव्रतौ ॥ नैतयोरंतरं
किंचिद्धर्मराज्याभिरक्षणे ॥ ९५ ॥ तस्मान्नब्राह्मणोदद्यात्कुर्वाणोधर्मतःकृषिम् ॥ ग्रामेशस्यनृपस्यापिकिंचित्तमप्यसौबलिम् ॥ ९६ ॥ अ
थान्यत्संप्रवक्ष्यामिकृषिकृच्छुद्धिकारणम् ॥ संशुद्धःकर्षकोयेनस्वर्गलोकेमहीयते ॥ ९७ ॥ सर्वसत्त्वोपकारायसर्वयज्ञादिसिद्धये ॥
नृपस्यकोशवृद्ध्यर्थंजायतेकृषिकृन्नरः ॥ ९८ ॥ कृषिंकुर्वन्प्रयत्नेनसर्वसत्त्वोपजीवनम् ॥ पितृदेवमनुष्याणांपुष्टयेस्यात्कृषीवलः ॥
॥ ९९ ॥ वयांसिचान्यसत्त्वानिक्षुत्तृष्णापीडिताःप्रजाः ॥ उपयुंजंतिसस्यानिक्षेत्रजातानिनित्यशः ॥ १०० ॥ पुष्ट्यर्थंमुष्टिमेकांपाद
दत्पापंव्यपोहति ॥ यस्यक्षेत्रस्ययावंतिप्राणिनोऽदन्तिसर्वतः ॥ १ ॥ तावंतोपिविमुच्यंतेपातकात्कृषिकारकाः ॥ कृताग्निकार्य

देहोपिब्राह्मणोन्यतमोपिवा ॥ २ ॥ आददानःपरक्षेत्रेपथिगच्छन्नलिप्यते ॥ क्षेत्राद्विमुच्यतेपापान्नियवंकृषिसंभवात् ॥ ३ ॥ गृही
तंक्षेत्रिणोधान्यंनिवेदयतिवाण्यपि ॥ अनिवेदितेतदर्धंस्यात्पातकंकर्षकस्यच ॥ ४ ॥ भावशुद्धावतोधर्मोह्यनेनतद्विशोधयेत् ॥ मु
ष्टितुकल्पयन्धान्यंसर्वपापंव्यपोहति ॥ ५ ॥ कृषिकृद्यदहोरात्रंकिंचित्किंचित्स्वशक्तितः ॥ प्रदद्यादर्थिनामन्नंतेनैवाघंव्यपोहति ॥ ६ ॥
यत्किंचिदर्थिनेदद्याद्भिक्षामात्रंचभिक्षवे ॥ अन्नंसुसंस्कृतंवापितेनसीरीविशुध्यति ॥ ७ ॥ सीतायज्ञंचयःकुर्यात्सिद्धसस्येखलंगते ॥
अनंतकृतपापोपिमुक्तोभवतिकर्षकः ॥ ८ ॥ खलयज्ञंप्रवक्ष्यामियत्कुर्वाणाद्विजायतः॥विमुक्ताःसर्वपापेभ्यःस्वर्गलोकस्त्वमवाप्नुयुः ॥ ९ ॥
चतुर्दिक्षुखलेकुर्यात्प्राकारमतिघनांवृतिम् ॥ सैकद्वारपिधानांचविदध्याच्चैवसर्वतः ॥ ११० ॥ खरोष्ट्राजोरणास्तत्रविशतोप्यनिवास्ये
त् ॥ श्वसूकरशृगालादीन्काकोलूककपोतकान् ॥ ११ ॥ त्रिसंध्यंप्रोक्षणंकुर्यादानीतान्युक्षणांबुभिः ॥ रक्षोघ्नभस्मानमकुर्याज्जल
धाराभिरक्षणम् ॥ १२ ॥ त्रिशन्ध्यमर्चयेत्सीतांपाराशरमृषिंस्मरन् ॥ प्रेतभूतादिनामानिनवदेत्खलमध्यगः ॥ १३ ॥ सूतिकां
गृहवत्तत्रकर्तव्यंपरिरक्षणम् ॥ हरन्त्यरक्षितंयस्माद्राक्षसाःसर्वमेवहि ॥ १४ ॥ प्रशस्तदिनपूर्वाह्णेनापराह्णेनसंध्ययोः ॥ धान्योन्मानं
प्रकुर्वीतसीतापूजनपूर्वकम् ॥ १५ ॥ यजेत्खलेतुभिक्षाभिः कालेरोहिणएवहि ॥ तत्रभक्त्याप्रदत्तंयद्भवेत्सर्वंतदक्षयम् ॥ १६ ॥ ख
लयज्ञेदक्षिणैपात्रह्मणानिर्मितापुरा ॥ भागधेयमर्यांकृत्वातांगृह्णंत्विहमामिकाम् ॥ १७ ॥ शतक्रत्वादयोदेवाःपितरःसोमपादयः ॥ ॥२०॥
सनकादिमनुष्याश्चयेचान्येदक्षिणाशिनः ॥ १८ ॥ एतदुद्दिश्यविप्रेभ्यःप्रदद्यात्प्रथमंहली ॥ अन्येषामर्थिनांपश्चात्कारुकाणांततःपरम् ॥
॥ १९ ॥ दीनानामप्यनाथानांकुष्ठिनांकुशरीरिणाम् ॥ क्लीबांधबधिरादीनांसर्वेषामपिदीयते ॥ १२० ॥ वर्णानांपतितानांचदद्द्भूतानि

तर्पयेत् ॥ चांडालांश्चश्वपाकांश्चप्रीत्यातूच्चावचानिच ॥ २१ ॥ येकेचिदागतास्तत्रपूज्यास्तेऽतिथिवद्द्विजाः ॥ स्तोकशःसीरिभिः
सर्वैर्वर्णिभिर्गृहमेधिभिः ॥ २२ ॥ दत्वातुमधुरांवाचंक्रमात्तेथविसर्जिताः ॥ तत्प्रवेश्याशनंगेहेश्राद्धमाभ्युदयंश्रयेत् ॥ २३ ॥
शरद्धेमंतवासंतनवान्नैःश्राद्धमीरितम् ॥ नाकृत्वान्नंतदश्नीयात्तदश्नन्नघमश्नुते ॥ २४ ॥ कृपाषुत्पाद्यधान्यानिखलयज्ञंसमाप्य
च ॥ सर्वसत्वहितेयुक्तइहामुत्रसुखीभवेत् ॥ २५ ॥ कृषेरन्यत्रनोधर्मोनलाभःकृषितोन्यतः ॥ सुखंनकृषितोन्यत्रय
दिधर्मेणवर्तते ॥ २६ ॥ अवस्त्रत्वंनिरन्नत्वंकृषितोनैवजायते ॥ अनातिथ्यंचदुःस्थत्वंगोमतांनकदाचन ॥ २७ ॥ निर्ध
नत्वपंसत्यत्वंविद्यायुक्तस्यनक्वचित् ॥ अस्थानित्वमभाष्यत्वंनसुशीलस्यकर्हिचित् ॥ २८ ॥ वदंतिमुनयःकेचित्कृष्यादीनां
विशुद्धये ॥ लाभस्यांशप्रदानंचसर्वेषांशुद्धिकृद्भवेत् ॥ २९॥ प्रतिग्रहाच्चतुर्थांशंवणिग्लाभात्तृतीयकम् ॥ कृषितोविंशकंचैवदद्दतोनास्ति
पातकम् ॥ १३० ॥ राज्ञोदत्वाथषड्भागंदेवानांचैकविंशकम् ॥ त्रयस्त्रिंशंचविप्राणांकृषिकर्मानलिप्यते॥३१॥ कृष्यांयदुत्पाद्ययवादिका
निधान्यानिभूयांसिमखान्विधाय ॥ मुक्तोगृहस्थोपिपराशरोक्तःतस्यामयाकश्चिदवादिशेषः॥३२॥ देवामनुष्याःपितरश्चसर्वेसाध्याश्चयक्षा
श्चसकिंनराश्च ॥ गावोद्विजेंद्राःसहसर्वसत्वैः कृष्यान्नतृप्तामनिमनाकरोति ॥ ३३ ॥ यश्चैतदालोक्यकृषिंविदध्याल्लिप्येन्नपापेनसभूभवेन ॥
कुटुंबिसीरेणविवारितापिस्याद्भूतधात्रीवरदानुदात्री ॥ ३४ ॥ षट्कर्माणिकृषिंषचकुर्युर्ज्ञात्वाविधिंद्विजाः ॥ तेमरादिवरप्राप्ताः स्वर्गलोक
मवाप्नुयुः ॥ ३५ ॥ षट्कर्मभिः कृषिःप्रोक्ताद्विजानांगृहमेधिनाम् ॥ गृहंचगृहिणीमाहुस्तद्विवाहस्तथोच्यते ॥ १३६ ॥ ॥ इतिबृहत्पारा
शरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांकृषिकर्मसीताधर्मोयज्ञोपधर्मोनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ स्वयंचवाहितैःक्षेत्रे

धान्यैश्चस्वयमर्जितैः ॥ कुर्याद्विवाहयागादिपंचयज्ञांश्चनित्यशः ॥ १ ॥ अष्टौविवाहानारीणां संस्कारार्थंप्रकीर्तिताः ॥ ब्राह्मादिका
न्क्रमेणैतान्संप्रवक्ष्याम्यतःपृथक् ॥ २ ॥ जात्यादिगुणयुक्तायपुंस्त्वेसतिवरायच ॥ कन्यालंकृत्यदीयेतविवाहोवैधसःस्मृतः ॥ ३ ॥
रेतोमज्जातियस्याप्सुमूत्रंचह्लादिफेनिलम् ॥ स्यात्पुमाँल्लक्षणैरेतैर्विपरीतस्तुषंढकः ॥ ४ ॥ यायज्ञेवर्तमानेतुऋत्विजेकर्मकुर्वते ॥
कन्यालंकृत्यदीयेनविवाहःसतुदैविकः ॥ ५ ॥ वरायगुणयुक्तायविदुषेसदृशायच ॥ कन्यागोद्वयमादायदीयेतार्षःसउच्यते ॥ ६ ॥
कन्याचैववरश्चोभौस्वेच्छयाधर्मचारिणौ ॥ स्यातामितिहियत्रोक्तादानंकायविधिस्त्वयम् ॥७॥ एतावदेहिमेद्रव्यमित्युक्त्वाप्राग्वरायच ॥
यत्रकन्याप्रदीयेतसर्वदैत्यविधिः स्मृतः ॥ ८ ॥ यत्रान्योन्याभिलापेणउभयोर्वरकन्ययोः ॥ ततोस्तुयोविवाहःस्याद्गांधर्वःप्रथितस्तुसः ॥
॥ ९ ॥ युद्धेहत्वाबलात्कन्यांयत्राच्छिद्यापहृत्यच ॥ ऊह्यतेसतुविद्वद्भिर्विवाहोराक्षसःस्मृतः ॥ १० ॥ सुप्तावाप्रमत्तावाछलात्कन्याप्रगृ
ह्यते ॥ सर्वेभ्यःसतुपापिष्ठः पैशाचःप्रथितोष्टमः ॥ ११ ॥ आद्याआद्यस्यषट्प्रोक्ताधर्म्याश्चत्वारएवहि ॥ चत्वारोन्येद्वितीयस्यआद्य
स्यचद्वक्षस्यच ॥ १२ ॥ पंचमश्चतथाषष्ठःस्मृतौतुत्रिचतुर्थयोः ॥ द्वितीयस्यापियेप्रोक्ताएतयोस्तेनचाष्टमः ॥ १३ ॥ वैधसाद्यानुरू
पेणद्वितीयाःपरमाःस्मृताः ॥ सर्वेसप्तममेकस्यद्वितीयस्यैवकीर्तिताः ॥ १४ ॥ अन्यावत्यधर्मौप्रोक्ताकुद्वाहोशक्तिसूनुना ॥ तथायुगस्व
रूपेणप्रोक्तोदैत्यस्तुमानवः ॥ १५ ॥ तारयंतेप्राक्ततोधस्ताच्चतुराद्यविवाहजैः ॥ स्वात्मनाद्विर्गुणान्वंशान्दशसप्तत्रयश्चषट् ॥ १६ ॥
स्त्रीणामाजीवशर्मार्थंवंशशुद्ध्यैप्रयत्नवान् ॥ वरंहिवरयेद्धीमाञ्जात्यादिगुणसंयुतम् ॥ १७ ॥ जातिर्विद्यावयःशक्तिरारोग्यंबहुपक्षता ॥
शीलंचवित्तसंपत्तिरष्टावेतेवरेगुणाः ॥ १८ ॥ जातिर्विद्याचरूपंचशीलंचैवनवंवयः ॥ अरोगित्वंविशेषेणपुंस्त्वेसत्यपिलक्षयेत् ॥ १९ ॥

सज्जातिरूपवित्तंचतथाग्रवयसंदृढम् ॥
जातिरूपंचशीलंचवयोनवमरोगितम् ॥ सावरत्वंविशेषेणसंलक्ष्यवरमाश्रयेत ॥ २० ॥
नजातिनचविद्यांचवित्तंनाचरणंस्त्रियाः ॥ किंतुताःप्रीतिमिच्छंतितस्मात्प्रीतिकरं
संतोषजननंस्त्रीणांप्रज्ञावानाश्रयेद्वरम् ॥ २१ ॥ कन्यायाश्ववरस्यापिय
श्रयेत् ॥ २२ ॥ पित्रायम्यसगोत्रत्वंमात्रायस्यसपिंडता ॥ नचतामुद्वहेत्कन्यांदारकर्मण्यनादृतः ॥ २३ ॥ कन्यायाश्ववरस्यापिय
थोभयोर्भवेद्धृतिः ॥ तथाकन्यांवरंधीमान्वरयेद्वंशशुद्धये ॥ २४ ॥ नानामतानिसर्वेषांसतांसंतिवरंप्रति ॥ संतानस्यविशुद्ध्यर्थंजात्या
दिषुचनान्यतः ॥ २५ ॥ दूरस्थानामविद्यानांमुमुक्षूणांगरीयसाम् ॥ शूराणांनिर्धनानांचनदेयाकन्यकाबुधैः ॥ २६ ॥ नातिदूरेनचास
न्नेअत्याढ्येचातिदुर्बले ॥ वृत्तिहीनेचमूर्खेचषट्सुकन्यानदीयते ॥ २७ ॥ वर्जयेदतिरिक्तांगींकन्यांहीनाङ्गरोगिणीम् ॥ सल्लोमांलोमही
नांचनिर्लोमचतिवाग्युताम् ॥ २८ ॥ पितापितामहोभ्रातामातामातामहोपिवा ॥ कन्यादास्तुक्रमेणैतेपूर्वाभावेपरःपरः ॥ २९ ॥ अधिकारीयदा
नस्यात्तदाख्यायनृपस्यसा ॥ तद्गिराचस्वयंगम्यकन्यापिवरयेद्वरम् ॥ ३० ॥ पिंगलांकृष्णपिंगाक्षींदुष्टवाक्काकनिःस्वनाम् ॥ स्थूलांगजानुपदां
चसदाचाप्रियवादिनीम् ॥ ३१ ॥ त्यजेन्नगनदीनाम्नींपक्षिवृक्षर्क्षनामिकाम् ॥ अहिप्रेष्यामनाम्नींचतथाभीषणनामिकाम ॥ ३२ ॥ स्वजा
तिमुद्वहेत्कन्यांसुरूपांलक्षणान्विताम् ॥ अरोगिणींसुशीलांचतथाभ्रातृमतीमपि ॥ ३३ ॥ सर्वावयवसंपूर्णामसमोत्रांकुलोद्भवाम् ॥ हंस
मातङ्गगमनांमृद्वंगींचसुलोचनाम् ॥ ३४ ॥ सलज्जांशुभनादांचपतिप्रीतिकरीमपि ॥ श्वश्रूश्वशुरगुर्वादिशुश्रूषाकारिणींप्रियाम् ॥ ३५ ॥ अ
व्यंगांकुलजातांतामनभिशस्तवंशजाम् ॥ प्रस्वेदशुभमंधांचशुभमिच्छन्समुद्वहेत् ॥ ३६ ॥ विप्रःस्वामपरेद्वेचराजास्वामपरांतथा ॥
वैश्यःस्वांचचतुर्थींचक्रमेणैवंसमुद्वहेत् ॥ ३७ ॥ पितृतःसप्तमीमेकेमातृतःपंचमीमपि ॥ उद्वहेदितिमन्यंतेकुलधर्मसमाश्रिताः ॥ ३८ ॥

बृ. पा. उक्तलक्षणकन्यायाःकृत्वापाणिग्रहंद्विजः ॥ धर्म्योद्वाहेनकेनापितदादद्याद्धुताशनम्॥३९॥दायाद्यकालेवादद्यात्तदुक्तकर्मकृद्द्विजः॥ यदावा अ०
पिभवेच्छ्रद्धासंपत्तिर्वायदाभवेत् ॥ ४० ॥ ऋतावृतौस्त्रियंगच्छेत्स्वेच्छयावास्मरन् ॥ सर्वंतदिच्छयाकुर्याद्यथोभयोर्भवेद्धृतिः ॥ ४१ ॥ ४
॥२२॥ भोज्यालंकारवासोभिःपूज्याःस्युःसर्वदास्त्रियः ॥ यथाकिंचिन्नशोचंतिनित्यंकार्यंतथानृभिः ॥ ४२ ॥ आयुर्वित्तंयशःपुत्राःस्त्रीप्रीत्या
स्युर्नृणांसदा ॥ नश्यंतितेतदप्रीतौतासांशापादसंशयम ॥ ४३ ॥ स्त्रियोयत्रतुपूज्यंतेसर्वदाभूषणादिभिः ॥ पितृदेवमनुष्याश्चमोदंते
तत्रवेश्मनि ॥४४॥ स्त्रियस्तुष्टाश्रियःसाक्षाद्दुष्टाश्चेद्दुष्टदेवताः ॥ वर्धयंतिकुलंतुष्टानाशयंत्यपमानिताः ॥ ४५ ॥ नावमान्याःस्त्रियःसद्भिःप
तिश्वशुरदेवरैः॥भ्रात्रापित्राचमात्राचतथाबंधुभिरेवच ॥४६॥ स्त्रियाश्चपुरुषस्यापिभवेद्यत्रोभयोर्धृतिः ॥ तत्रधर्मार्थकामाःस्युस्तदधीनाय
तस्त्वमी ॥ ४७ ॥ षट्कर्माणिनृणांतेषांयेषांभार्यापतिव्रता ॥ पतिलोकंतुतायांतितपसातेनयोगवत् ॥ ४८ ॥ पतिव्रतासुसाध्वीस्त्री अपि
दुष्कृतकारिणम् ॥ यातिद्यांपतिमुद्धृत्यफेर्कीवपानितोरगम् ॥ ४९ ॥ जीवन्वापिमृतोवापिपतिरेवप्रभुःस्त्रियः ॥ नान्यास्तिदेवतातासांप
तिरेवप्रभुर्यतः ॥ ५० ॥ मनसापिहिदुष्टास्त्रीयान्यभावापतिंप्रति ॥ सायातिनरकंघोरंतद्द्रोहादणुतोपिवा ॥ ५१ ॥ नियोज्यागृहकृत्येषुस
र्वदासद्भिःस्त्रियः ॥ गृहार्थासक्तचित्तास्तास्तदेषार्हतिशोचितुम् ॥ ५२ ॥ स्त्रीणामष्टगुणःकामोव्यवसायश्चषड्गुणः ॥ लज्जाचतु
र्गुणातासामाहारश्चतदर्धकः ॥ ५३ ॥ नजातिंनैववित्तंचनचरूपमपेक्षते ॥ किंतुताभिःपुमानेषइत्थमित्येवभुज्यते ॥ ५४ ॥ किं
कुर्वाणाःस्त्रियोभर्तुरायुष्यधननाशकाः ॥ अनायासेनतास्तस्यपरासक्ताभवंतिहि ॥ ५५ ॥ नारीणांचनदीनांचगतिर्नज्ञायतेनृभिः ॥ ॥२२॥
कुलकूलप्रपातेचकालक्षेपोनविद्यते ॥ ५६ ॥ चेष्टाचारित्रचित्तानिस्त्रीणांदेवानजानते ॥ किंपुनःप्राणिमात्रास्तुसर्वथानष्टबुद्धयः ॥

॥ ५७ ॥ तस्मात्ताःसर्वथारक्ष्याः सर्वोपायैर्नृभिःसदा ॥ श्वशुरैर्देवराद्यैश्चपितृभ्रात्रादिभिस्तथा ॥ ५८ ॥ विवाहात्प्राक्पितारक्षे
द्यौवनस्थांपतिस्तथा ॥ रक्षेयुर्वार्धकेपुत्रानास्तिस्त्रीणांस्वतंत्रता ॥ ५९ ॥ स्वातंत्र्येणविनश्यंतिकुलजाअपियोषितः ॥ अस्वा
तंत्र्यमतःस्त्रीणांप्रजापतिरकल्पयत ॥ ६० ॥ अशौचाश्चसशौचास्ताअमेध्याअपिपावनाः ॥ दुर्वाचोपिसुवाचस्तास्तस्मादन्वेपयेत्नताः ॥
॥ ६१ ॥ शौचंवचंचमेध्यत्वंसोमगंधर्वपावकाः ॥ ददुस्तासांवरानेतांस्तस्मान्मेध्यतराःस्त्रियः ॥ ६२ ॥ भर्तारोवाभविष्यंति
युष्मांश्चित्तानुसारिणः ॥ यथेच्छाकामिनःसर्वेतासामिंद्रोवरंददौ ॥ ६३ ॥ तस्मात्तदिच्छयाकामीपुमान्नस्यात्स्वकास्त्रियः ॥ रक्षणी
यायतस्तास्तुसर्वोपायेनयोषितः ॥ ६४ ॥ सामाहमृक्त्वमित्याद्यैर्देवैर्न्यस्तांनृणांतनौ ॥ अर्धकायानराणांताःस्त्रीणांनातःपृथग्व्रतम् ॥
॥ ६५ ॥ नदिवापिस्त्रियंगच्छेदिच्छंस्तदिच्छयापिचं ॥ नपर्वसुनसंध्यासुनतांरात्रिचतुष्टये ॥ ६६ ॥ नोदक्यांनदिवागच्छेन्नसंग
भांव्रतांस्थताम् ॥ अधिगच्छेदविद्वान्यस्तदायुःक्षयमेतिच ॥ ६७ ॥ वंध्याष्टमेपरित्याज्यानवमेचमृतप्रजा ॥ एकादशेस्त्रीजननी
सद्यस्त्वप्रियवादिनी ॥ ६८ ॥ नवक्रोभिगमंकुर्यात्पाणिग्राहीतुयोषितः ॥ कुर्याच्चेत्पितरस्तस्यरेतोभुंजःपतंतिहि ॥ ६९ ॥ भा
र्याधीनंसुखंपुंसांभार्याधीनंगृहंधनम् ॥ भार्याधीनासुतोत्पत्तिभार्याधीनःशुभोदयः ॥ ७० ॥ नगृहेणगृहस्थःस्याद्भार्ययाकथ्यतेगृ
ही ॥ यत्रभार्यागृहंतत्रभार्याहीनंगृहंवनम् ॥ ७१ ॥ गृहीस्याद्गृहधर्मेणसर्वपंचमखादिकः ॥ तद्धीनोनगृहस्थःस्यात्कुर्यात्तान्यत्नत
स्ततः ॥ ७२ ॥ श्रौतेवायादिवास्मार्तैःपंचयज्ञान्नहापयेत ॥ कुर्युःपंचमहायज्ञान्सूनादोपापनुत्तये ॥ ७३ ॥ पंचसूनावहंत्य
त्रसर्वेषांगृहमेधिनाम् ॥ कंडन्युदंककुंभश्चचुल्लीपेषण्युपस्करः ॥ ७४ ॥ यदादौवेदमारभ्यस्नात्वाभक्त्याद्विजोत्तमः ॥ अध्यापये

द्विजाञ्छिष्यान्सोयंब्रह्ममखःस्मृतः ॥ ७५ ॥ स्नात्वाचाहरहःसर्वान्देवांश्चर्षमनुजान्पितॄन् ॥ तर्पयेदंभसाभक्त्यापितृयज्ञःसवैमतः ॥
॥ ७६ ॥ श्रौतोवायदिवास्मार्तोयज्जुहोतिहुताशने ॥ विधिवन्नित्यशोविप्रःसतुदेवमखःस्मृतः ॥ ७७ ॥ दशस्वाशासुयः
क्षिपेद्भूतशेषाद्बलिंद्विजः ॥ इंद्रादिभ्यस्तथातेभ्यःसर्वभूतमखोमतः ॥ ७८ ॥ आयांतमतिथिंभक्त्यायोभोजयतिनित्यशः ॥
अन्यानभ्यागतांश्चैवसामनुष्येष्टिरुच्यते ॥ ७९ ॥ एवंपंचमखान्कुर्वन्मधुमांसाज्यपायसैः ॥ सतर्पयेत्पितॄन्देवान्मनुष्या
न्स्वर्गमाप्नुयात् ॥ ८० ॥ गृहस्थायेउपासीरन्वांचधेनुंचतुःस्तनीम् ॥ स्वर्गौकसांपितॄणांतुपूज्यास्मैतिथिस्त्वहदिवि ॥ ८१ ॥
चत्वारस्तुस्तनाएतेयजुर्वेदउदाहृताः ॥ स्वाहाकारोवषट्कारोहंतकारस्तथास्वधा ॥ ८२ ॥ देवानांभागधेयंस्यादन्यच्चमनुजस्यतु ॥
पितॄणांहिचतुर्थंस्यादिनिवेदोनिदर्शनम् ॥ ८३ ॥ इतिनिर्वर्त्यविधिवत्सकलंकर्मपैतृकम् ॥ प्राणाग्निहोत्रविधिनाभुंजीतान्नमघापहम् ॥ ८४ ॥
अदत्वापोष्यवर्गस्यअकृत्वाध्ययनादिकम् ॥ असाक्षिकंचयोऽश्नीयाद्यात्यसौकिल्बिषंद्विजः ॥ ८५ ॥ प्राङ्मुखादिक्रमेणाश्नन्नायुः
कीर्तिश्रियंऋतम् ॥ अविधिर्विदिगन्यासुयत्तदश्नंतिराक्षसाः ॥ ८६ ॥ अथविप्राग्निहोत्रस्यश्रूयतांद्विजसत्तमाः ॥ वक्ष्यमाणोविधिः
पुण्यःप्रेत्यचेहचपावनः ॥ ८७ ॥ योविधिर्देवताभ्यस्तःसंसारबंधनाशकः ॥ तद्विदस्तुदिवंयांतिमुक्तादेवऋणेनतु ॥ ८८ ॥ उ
द्धरेद्योद्विदिन्वाश्नन्पुरुषानेकविंशतिम् ॥ सर्वेष्टिफलभाग्यावद्ब्रह्मणःपदमव्ययम् ॥ ८९ ॥ यःकालाकालविद्विप्रोनैनःस्पर्शोसकर्हिचित् ॥
सोस्पृष्टेनाधिशेत्तत्रयद्गत्वानैतिसंसृतौ ॥ ९० ॥ दशपंचांगुलिव्याप्तंनामिकायाबहिःस्थितम् ॥ जीवोयत्रविबुध्येतसाकलाषोडशीस्मृता ॥
॥ ९१ ॥ सर्वमतत्तयाव्याप्तंत्रैलोक्यंसचराचरम् ॥ ब्रह्मविद्येतिविख्यातावेदांतेषुप्रदर्शिता ॥ ९२ ॥ नवंदवेदमित्याहुर्वेदानांपरमं

पदम् ॥ तत्पदंविदितंयेनसविप्रोवेदपारगः ॥ ९३ ॥ आहुतिःसापराज्ञेयासाचशांतिःप्रकीर्तिता ॥ गायत्रीसाचाविज्ञेयासाचसंध्या
प्रकीर्तिता ॥ ९४ ॥ त्रजप्यंतच्चविज्ञेयंतद्धतंतदुपास्तितम् ॥ नांकलांयोविजानातिसकलाज्ञोद्विजःस्मृतः ॥ ९५ ॥ तत्तुसीयंपदं
शांतिर्यस्मिँल्लीनमिदंजगत् ॥ तज्ज्ञात्वापरमंतत्त्वंनभूयःपुरुषोभवेत् ॥ ९६ ॥ प्राणमार्गास्त्रयःप्रोक्तास्तिस्रोनाड्यःप्रकीर्तिताः ॥
इडाचपिंगलाचैवसुषुम्नाचतृतीयका ॥ ९७ ॥ इडाचवैष्णवीनाडीब्रह्माणीपिंगलास्मृता ॥ सुषुम्नाचेश्वरीनाडीत्रिधाप्राणवहाःस्मृताः ॥
॥ ९८ ॥ उत्तरंदक्षिणंज्ञेयंदक्षिणोत्तरसंज्ञिकम् ॥ मध्येतुविषुवंप्रोक्तंपुटद्वयविनिःसृतम् ॥ ९९ ॥ संक्रांतौविषुवेचैवयोविजानाति
विग्रहम् ॥ नित्ययुक्तःसयोगीचब्रह्मवादिभिरुच्यते ॥ १०० ॥ मध्याह्नचार्धरात्रेचप्रभातेस्तमयेनथा ॥ विषुवंतंविजानीयात्पुट
द्वयविनिर्गतम् ॥ १०१ ॥ हृत्पुंडरीकमरणींमनोमंथानमेवच ॥ प्राणायामाभ्यसेदग्निमात्माध्वर्युःप्रतिष्ठितः ॥ २ ॥ ज्वालयेत्पूर
केणाग्निंस्थापयेत्कुंभकेनतु ॥ रेचकेणार्धवक्रेणततोहोमंकरोतियः ॥ ३ ॥ यस्तद्धृदिस्थितंपद्मंमधोनालंऊर्ध्ववस्थितम् ॥ तस्मिन्वि
केसितेपद्मेप्राणोवायुर्विसर्पति ॥ ४ ॥ वामहस्तधृतेपात्रेदक्षिणेचाभिसंस्थितः ॥ सनादमुच्चरेद्रद्मप्रअच्छिन्नाग्रंतुपूरयेत् ॥ ५ ॥
पूरयन्पूरकंप्राहुर्निश्चलंकुंभकंविदुः ॥ निर्गच्छतिशनैर्वायुंरेचकंतंविनिर्दिशेत् ॥ ६ ॥ स्वाहांतैःप्रणवाद्यैश्चपुमान्नाम्नाचवायुभिः ॥
जितात्मायोजितःषष्ठःषडाहुत्याहुतंभवेत् ॥ ७ ॥ जिह्वादत्तंग्रसेदन्नंदंतैश्चनतत्स्पृशेत् ॥ दशनैःस्पृष्टमात्रेणपुनराचमनंचरेत् ॥ ८ ॥
जितात्मायोजितः
मुखआहवनीयोग्निर्गार्हपत्यस्तथोदरे ॥ हृदयेदक्षिणाग्निश्चगृह्याग्निश्चापिदक्षिणे ॥ ९ ॥ सभ्यश्चोत्तरतश्चेत्यइत्यग्निस्मरणक्रमः ॥ प्राणाद्ये
वाग्निहोत्रादिचिंतयेत्तद्वदेवतु ॥ ११० ॥ होतारंप्राणमित्याहुरुद्गातारमपानकम् ॥ ब्रह्माणंव्यानमित्येवोदानमध्वर्युमित्यपि ॥ ११ ॥ समा

सू. पा. नंचेहयज्ञानमित्यृत्विजांक्रमंबुधाः ॥ अहंकारंपशुंचात्रप्रणवंयूपमित्यपि ॥ १२ ॥ बुद्धिरित्यरणिःसृष्टिलोमानिचकुशाःस्मृताः ॥ मनो
॥२४॥ विभक्तांत्विग्जिह्वानग्नेरितिप्रचक्ष्यते ॥ १३ ॥ कृत्वाग्निमात्रमोङ्कारंहुंकारंचतथापुनः ॥ उच्छ्वासाजननाच्चाग्नेहरितलोहितापिंगल ॥ अ०
॥ १४ ॥ सप्तपार्श्वयेतुभ्यंक्षुद्राह्निदैवतंचयत ॥ द्विजिह्वजठरायासेस्वाहोप्राणायव्यत्ययः ॥ १५ ॥ इंद्रगोपकवर्णायत्रिजिह्वायांश्विदैवत ॥ ४
ॐ स्वाहेतिअपानायस्वाहाकारांतमुच्चरेत ॥ १६ ॥ पद्मकिंजल्कवर्णायबहुरूपायचाग्नये ॥ प्रानलायव्यानायओंस्वाहाइं
तिचोच्चरेत ॥ १७ ॥ गोक्षीरसमवर्णायपर्जन्यवाह्निदैवतं ॥ स्वाहोदानायसोंकारमवलायपरित्विषे ॥ १८ ॥ तडित्समानवर्णायवा
य्वाग्निदैवतायते ॥ ओंस्वाहेतिसमानायओंस्वाहाचेतिवेधसे ॥ १९ ॥ तर्जनीमध्यमांगुष्ठलग्नाप्राणस्यचाहुतिः ॥ मध्यमानामिकांगुष्ठे
रपानस्याहुतिःस्मृता ॥ कनिष्ठानामिकांगुष्ठैर्व्यानस्यपरिकीर्तितः ॥ २० ॥ मध्यमानामिकास्वन्यामुदानंतुहुयाद्बुधः ॥ समानेसर्वैरुद्धृत्य
आहुतेःस्यात्समानता ॥ २१ ॥ जलंपीत्वाचतृप्यंतिरेचयेच्चशनैः शनैः ॥ ततोन्यदन्नमश्नीयात्पूरणायोदरस्यतु ॥ २२ ॥ विप्राणांक्षाग्निहो
त्रस्ययेद्विजानवजानते ॥ अपानेनतुभुंजंतितेषांमुखमपानवत ॥ २३ ॥ ज्ञात्वाविधिंचयोभुंक्तेयथोक्तमिदमाचरन् ॥ इहामुत्रचपूज्य
त्वंब्रह्मभूयायकल्पते ॥ २४ ॥ त्रिःसप्तकुलमुद्धृत्यदातुरप्यक्षयंभवेत ॥ दातुरेवहितत्पुण्यंभोक्तुश्चापिहितत्फलम् ॥ २५ ॥ दाताचैवतुभोक्ता
चताबुभौस्वर्गगामिनौ ॥ योजानातिविधिंचेमंसभवेद्ब्रह्मवित्तमः ॥ २६ ॥ एकंपिबतिगंडूषंत्यजेदर्धंधरातले ॥ पीतेनापितृतृप्तिस्तुभूत्य
केभूमिदेवताः ॥ २७ ॥ पिबेदेकंचगंडूषंब्राह्मणोज्ञानदुर्बलः ॥ सहत्वापितृदेवांश्चआत्मानंनरकंनयेत् ॥ २८ ॥ रहस्यंसर्वशास्त्राणांरक्षितात्यंदु ॥२४॥
र्लभम् ॥ ज्ञानानामुत्तमंज्ञानंकस्यचिन्नप्रकाशयेत् ॥ २९ ॥ योज्ञात्वाह्यप्रकाश्यानिपुंसामाविदुषांवदेत् ॥ प्राणायामफलंहत्वाआत्मानंनरकंनये

त् ॥ १३० ॥ योश्नीयाद्विधिवद्विप्रः कृतपात्रपरिग्रहः ॥ पूजितान्नमवाग्दुष्टं सापोशानं ससाक्षिकम् ॥ ३१ ॥ वाग्यतोन्यस्तपात्रो श्नन्ग्रासानष्टाव
पि द्विजः ॥ तस्य त्रिरात्रिपुण्यानि दैनेपि मुनयो विदुः ॥ ३२ ॥ चतुस्त्रिकोणां वृत्तां च विप्रक्षत्रविशां क्रमात् ॥ प्राहुः परिद्रुतं सर्वं तस्तद्धीनान्नं तु राक्षसम ॥
॥ ३३ ॥ गृह्णीयात्प्रांगपोशानं तथा भुक्त्वा सकृत्मयः ॥ अनग्नममृतं तत्स्याद्भुक्तमन्नं द्विजन्मनाम् ॥ ३४ ॥ काले भुक्त्वा समुत्थाय प्रेक्ष्याविप्रं समीक्ष्य
च ॥ अहर्पतिं सुखं स्थित्वा चिंतयेद्धृदि कृत्यकम् ॥ ३५ ॥ भार्याभोजनवेलायां भिक्षाः सत्ताथ पंचवा ॥ दत्त्वा शेषं समश्नीयात्सापत्या भृतकैः
सह ॥ ३६ ॥ निर्वर्त्य सकलं सोपि किंचित्स्थित्वा सुखेन तु ॥ स्वस्त्रीयरति कार्येषु सापि स्यात्तत्परा पुनः ॥ ३७ ॥ उपास्य पश्चिमां सन्ध्यां हु
त्वा चैव हुताशनम् ॥ किंचित्सायं समश्नीयात्सायं प्रातरिति श्रुतिः ॥ ३८ ॥ स्वाध्यायमभ्यसेत्किंचिद्यामयुग्मं शयीत च ॥ शयने मध्यमौ यामौ
ब्रह्मभूयाय कल्पते ॥ ३९ ॥ शयीत शयने पश्चादेकांते कास्त्रिया सह ॥ सेवनं मैथुनादीनां वदंति मुनिपुंगवाः ॥ १४० ॥ ऋतुस्नपासु पुत्रार्थी आ धा
नविधिनं द्विजः ॥ प्रमाद्य भस्मना योनिमिति मंत्रनिदर्शनात् ॥ ४१ ॥ कृत्वाधानविधानं तु पुनः स्त्रीयोगमभ्यसेत् ॥ नवेदविकृतौ यो
नौ विकाराद्विकृताः प्रजाः ॥ ४२ ॥ ब्रह्मन्मुहूर्तमुत्थाय प्रातः संध्यामुपक्रमेत् ॥ आसूर्यदर्शनात्संध्या सायं चैवार्कदर्शनात् ॥ ४३ ॥
बहिः संध्यामुपासीत संप्राप्ताविंभसः सदा ॥ उपासिता बहिः संध्या विशिष्टफलदा भवेत् ॥ ४४ ॥ अनृतं मद्यगंधं च दिवा मैथुनमेव च ॥ पुनाति वृ
षलस्यान्नं संध्या बहिरुपासिता ॥ ४५ ॥ सिंदूरारुणमाभाति नभो यावद्वितारकम् ॥ उदयेस्तमये भानोस्तावत्संध्येति संज्ञिता ॥ ४६ ॥
आधानतो द्वितीये तु मासि पुंसवनं भवेत् ॥ सीमंतोन्नयनं षष्ठे कार्यं मासे ष्टमेपि वा ॥ ४७ ॥ जातस्य जातकर्मस्याद्विधिवच्छ्राद्धपूर्वकम् ॥
दिने चैकादशे नाम शर्मादि द्विजजन्मनाम ॥ ४८ ॥ तुर्ये निष्क्रमणं मासि षष्ठेन्नप्राशनं स्मृतम् ॥ चूडाकर्म तृतीयेब्दे कार्यं वा कुलधर्मतः ॥ ४९ ॥

स्त्रीणाममंत्रविमंत्रस्यात्कार्यंकायविशुद्धये ॥ यस्यनस्युर्द्विजस्यैताःक्रियायदिकथंचन ॥ १५० ॥ सर्वान्यःसर्वथात्याज्योद्विजोयस्माद्द्विज
न्मनः ॥ मुंजमौर्वीशणानांचत्रिवृतारशनास्मृता ॥ ५१ ॥ कार्पासशणमेषोर्णान्युपवीतानित्रिवृंति ॥ पालाशवटपीलूनांदंडाश्चक्रमशो
मताः ॥ ५२ ॥ कार्ष्णंचरौरवंवास्तमजिनानिद्विजन्मनाम् ॥ शिरोललाटनासांताःक्रमाद्दण्डाःप्रकीर्तिताः ॥ ५३ ॥ अव्रणाःसंत्वचोद
ग्धाउक्ताःशुभकरानृणाम् ॥ त्रिष्टुप्जगत्यागायत्र्यात्रयाणामुपनायनम् ॥ ५४ ॥ गायत्र्यामविशेषोवामुंजादिष्वपरेषुचं ॥ तत्सवितुस्तां
सवितुर्विश्वारूपाणिवाक्रमात् ॥५५॥ औपनायनिकामंत्राविप्रादीनामुदाहृताः ॥ ब्राह्मणोविप्रगेहेषुनृपःस्वेषूत्तमेषुच ॥५६॥ वैश्योविप्रनृप
स्वेषुकुर्याद्भिक्षांसुवृत्तये ॥ एकान्नंनद्विजोश्नीयाद्ब्रह्मचारिव्रतेस्थितः ॥ ५७ ॥ भिक्षावृत्तिर्द्विजातीनामुप संसमास्मृता ॥ प्रतिग्रहो
नभिक्षास्यान्नतस्यांपरपाकता ॥ ५८ ॥ सोमपानसमाभिक्षाततोश्नीयात्सभिक्षया ॥ भिक्षयायस्तुभुंजीतनिराहारःसउच्यते ॥ ५९ ॥
भिक्षामनभिशस्तेषुसदाचारेषुद्विजेषुच ॥ भिक्षांतुक्रमशोभिक्षेद्वर्जयेच्चगुरोःकुलम् ॥ १६० ॥ स्वसारंभ्रातरंवापिस्वसारंमातुरेवच ॥ भिक्षे
तप्रथमंभिक्षांयाचान्यानविमानयेत् ॥ ६१ ॥ भिक्षांभवतिमेदेहिभिक्षांभवतिदेहिमे ॥ भिक्षांभवतिमेदेहिक्रमेणैतदुदाहरत् ॥ ६२ ॥
द्वादशाब्दंव्रतंधार्यंषडब्दंवाश्रुतिंप्रति ॥ अधीत्याथोत्सृजेत्तद्वैदत्वातुगुरवेवरम् ॥ ६३ ॥ यत्रसुस्नातकाःप्रोक्ताव्रतविद्योपसेविनः ॥
विद्यांसमाप्ययस्नायाद्विद्यास्नातकउच्यते ॥ ६४ ॥ समाप्यचव्रतंयस्तुव्रतस्नातकउच्यते ॥ यज्ञंसमाप्ययःस्नातिसिद्धिनामासउच्यते ॥
॥ ६५ ॥ अष्टरुद्रार्कवर्षाणिसगर्भाणिद्विजन्मनाम् ॥ मुख्यकालोव्रतस्यायमन्यउक्तोविपर्यये ॥ ६६ ॥ द्विगुणाब्देतुकर्तव्यांक्रमा
दुपनतिर्द्विजे ॥ हीनगायत्रिकाव्रात्याउक्तकालादनंतरम् ॥ ६७ ॥ नाध्याप्यानैवचोद्वाह्याव्यवहारविवर्जिताः ॥ नयाज्यानार्यकार्येषु

प्रयोज्यास्तेइतिश्रुतिः ॥ ६८ ॥ स्त्रीवन्निर्लोमवक्त्रायेदेहनिर्लोमवक्षसः ॥ उच्चोरसोनपंत्याश्चअहद्द्यास्तेपिगर्हिताः ॥ ६९ ॥ अजस्र
विहितंकुर्युःप्राप्नुयुस्तेसदाशुभम् ॥ दीर्घायुष्ट्वंप्रजावत्त्वमरोगित्वंयशोदिवम् ॥ १७० ॥ क्षीणायुष्ट्वंदरिद्रत्वमप्रजत्वंसरोगिताम् ॥ ग
र्हितत्वंचलोकेषुप्राप्नुर्निषिद्धकारिणाम् ॥ ७१ ॥ प्रातर्वायदिवासायंनाद्यादन्नमनर्चितम् ॥ नाद्यान्नमनपोशानंशुभप्रेप्सुर्द्विजःसदा ॥७२ ॥
अपोशानंविनानाद्यान्नाद्यादन्नमनर्चितम्॥अनद्यंनदिवासायंशुभमिच्छन्नचाश्नुते ॥७३॥षोडशाब्दानिविप्रस्यद्वाविंशतिनृपस्यच॥चतुर्वि
शतिरन्यस्यत्रात्यास्तेस्युरतःपरम्॥७४॥उपनेयानतेविप्रैर्नाध्याप्याःशूद्रधर्मिणः॥व्यवहार्यानैवयाज्याइतिधर्मविदोविदुः ॥७५॥ स्त्रीणामु
द्वाहएवैकोवेदोक्तःपावनोविधिः ॥ स्त्रीपुंसयोश्चविन्यासस्तयोरन्योन्यमुच्यते ॥ ७६ ॥ स्वस्मिन्यस्माद्बिभर्त्येषांपतिर्बिभर्तिसोपिताम् ॥
अतोभार्याचभर्ताचेत्यत्रवेदोनिदर्शनम् ॥ ७७ ॥ पतिर्विशतियज्जायांगर्भोभूत्वेहमातरम् ॥ तस्यांपुनर्नवोभूत्वादशमेमासिजायते ॥७८॥
जायोक्तातेनवैजायायदस्यांजायतेपतिः ॥ यइमंभवनंभार्याबीजमस्यांनिषिच्यते ॥ ७९ ॥ देवाऊचुर्मनुष्याहिभार्यापिजननीतुवः ॥ आ
त्मनाजायतेत्रात्मासैषापत्यविधारिणी ॥१८०॥ भार्याजायाजनन्येषाइतिवेदप्रतिष्ठिता ॥ पुन्नाम्नस्त्रायतेयस्मान्नरकात्पुत्रउच्यते ॥ ८१ ॥
यःपिताजातपुत्रस्यपस्येच्चेज्जीवतोमुखम् ॥ सर्वसंमृतिमाहृत्यसयातिब्रह्मणःपदम् ॥ ८२ ॥ तेनप्राप्तंफलंसर्वमैहिकामुष्मिकंचयत् ॥
किंदंडैराजिनैस्तीर्थैस्तपोभिर्वासमन्विभिः ॥८३॥ पुत्रान्पुमान्सइच्छंतुतेवैलोकेश्वराद्वराः ॥ प्राणोन्नमस्मिञ्छरणंहिवासोरूपंहिरण्यंपशवो
विवाहाः ॥ जायासखावाक्कृपणंहिपुत्रोज्योतिःपरंपुत्रइहाप्यमुत्र ॥ ८४ ॥ सपुण्यकृत्तमोलोकेयस्यपुत्राश्चिरायुषः ॥ विशेषणापिप्रथमं
त्वात्सपरंब्रह्मविंदति ॥ ८५ ॥ पुत्रेणप्राप्यतेस्वर्गोजातमात्रेणनिश्चितम् ॥ तस्मादिच्छंतिसर्वेपिपशवोपिवयांस्यपि ॥ ८६ ॥ जायाया

स्तद्विजायात्वंयदस्यांजायतेपुनः ॥ पुत्रस्यापिचपुत्रत्वंत्रायतेनरकार्णवात् ॥ ८७ ॥ यःपितासतुपुत्रःस्यात्ज्ञायैवहिजनन्यपि ॥ नपृथक्कंविदुस्तज्ज्ञास्तयोश्चापरयोरपि ॥ ८८ ॥ अयंहिपंथाःपुरुपस्यतस्यध्रुवंभवेत्पुत्रजनिर्हितस्य ॥ तद्वीक्ष्यचोर्ध्वेपशवोवयांसि पुत्रार्थिनोमानरमारुहंति ॥ ८९ ॥ जनिष्यमाणानिच्छंतिपितरःस्वकुलेसुतान् ॥ कश्चिद्गत्वागयायांनोवंशेपिंडान्प्रदास्यति ॥ ॥ १९० ॥ यक्ष्यत्यन्योश्वमेधेननीलंमोक्ष्यतिवावृषम् ॥ दानदोवाकुरुक्षेत्रेज्ञानीवाथभविष्यति ॥ ९१ ॥ शुद्धशौर्यैकचित्तोहिप्रां णान्मोक्ष्यतिगोगृहे ॥ एष्टव्यंपितृभिःसर्वपुत्रेभ्यःसकलंफलम् ॥ ९२ ॥ जीवतोवाक्यकरणात्क्षयाहेभूरिभोजनात् ॥ गयायांपिण्ड दानाच्चत्रिभिःपुत्रस्यपुत्रता ॥ ९३ ॥ पुच्छेशिरसियःशुक्लःशुक्लपाद्लोहितंवपुः ॥ देवांग्रभीष्टोनीलोयमुत्सृष्टःपावनोवृषः ॥ ९४ ॥ रक्तकृष्णोपिवाशुक्लःसुविषाणःशुभेक्षणः ॥ योनहीनातिरिक्तांगोवृषंतंवासमुत्सृजेत् ॥ ९५ ॥ उपासनंश्वशुरयोरकरोद्दुहिता तथा ॥ पतिव्रताचधर्मत्वात्पित्रोर्दुर्गतिकृद्भवेत् ॥ ९६ ॥ सपिनासतुवैपुत्रस्तत्समादुहितापिच ॥ पुत्रश्चदुहिताचोभौपितुः संतानकारकौ ॥ ९७ ॥ तत्सुतःपावयेद्वंशांस्त्रींश्चमातामहादिकान् ॥ दौहित्रःपुत्रवत्स्वर्ग्यउक्तौशास्त्रेषुतौसुतौ ॥ ९८ ॥ आधा नादिकसंस्काराःप्रोक्ताश्चैवद्विजन्मनाम् ॥ कर्तव्यास्तेस्वशाखोक्ताःकेचित्कुलक्रमेणतु ॥ ९९ ॥ चत्वारिंशच्चतेसर्वेनिषेकाद्याः प्रकीर्तिताः ॥ मखदीक्षाश्चविविधास्तथैवांत्येष्टिकर्मच ॥ २०० ॥ कुलाचारोपिकर्तव्यइतिशास्त्रविदोविदुः ॥ देशाचार स्तथाधर्मइत्युवाचपराशरः ॥ १ ॥ आचारःपरमोधर्मःसर्वेषामितिनिश्चयः ॥ हीनाचारश्चपुरुषःप्रेत्यचेहविनश्यति ॥ २ ॥ क्ले शभागीचसततंव्याधितोल्पायुरेवच ॥ आचारोव्यवहारश्चदुराचारोविपर्ययः ॥ ३ ॥ नृणामाचारतोधर्मःस्यादधर्मोविपर्ययात् ॥

तस्मादाचारवर्त्तेतव्यत्ययंतुविवर्जयेत् ॥ ४ ॥ आचारवंतोमनुजालभंतेवित्तंतथायुश्चसुतांश्चसौख्यम् ॥ धर्मंतथाशाश्वतमी
शलोकमत्रापिविद्वज्जनपूज्यतांच ॥ ५ ॥ वेदाःसहांगाःसपुराणविद्याःशास्त्राणिसर्वाणिचतद्विहीनम् ॥ कुर्युःस्वधोतान्यपिन
स्मृतानिनरंपवित्रंमुनयोवदंति ॥ ६ ॥ येधीतवेदाःक्रिययाविहीनाजीवंनिर्वेदमनुजाश्चमांस्तान् ॥ वेदास्त्यजेयुर्मरणस्यकालेनी
डंशकुन्ताइवजातपक्षाः ॥ ७ ॥ आचारहीननरदेहगताश्चवेदाःशौचंनिकिंनुकुलनवंतइतिस्मचित्ते ॥ यन्नोभवद्वपुषिपुण्यशुभप्र
हीणेस्थास्नंतदत्रभगवान्विधिरेवशोच्यः ॥ ८ ॥ कर्तव्यंयत्नतःशौचशौचमूलाद्विजाःस्मृताः ॥ शौचाचारविहीनानांसर्वाः
स्युर्निष्फलाःक्रियाः ॥ ९ ॥ तत्सद्भिर्विविधंप्रोक्तंबाह्यमाभ्यंतरंतथा ॥ विण्मूत्रशोधनंबाह्यंचित्तशुद्धिस्तदांतरम् ॥ २१० ॥
मृद्भिरद्भिर्बहिःशौचंतत्कर्तव्यंद्विजातिभिः ॥ भावशुद्धिःपरंशौचमाहुराभ्यंतरंबुधाः ॥ ११ ॥ गंधलेपापहंबाह्यंशौचमाहुर्मनी
षिणः ॥ यस्यपुंसश्चतच्छौचंशौचैस्तस्याकिमन्यकैः ॥ १२ ॥ वाङ्मनोजलशौचानिसदायेषांद्विजन्मनाम् ॥ त्रिभिःशौचैरुपेतो
यःसस्वर्ग्योनात्रसंशयः ॥ १३ ॥ स्त्रियंरिरंसुर्द्रविणंजिहीर्षुर्वधंचिकीर्षुर्मनुजःपरस्य ॥ विवक्षुरत्यंतमवाच्यवाक्यंकथंसशुद्धिंस
मुपैतिशौचात् ॥ १४ ॥ किंनिष्कामस्यनारीभिःकिंगतासोश्चभेषजैः ॥ जितेंद्रियस्यकिंशौचैर्निष्फलेमूर्खदत्तवत् ॥ १५ ॥
नगतिर्मूर्खदानेननतारोभसिवाश्मनाम ॥ तस्मात्तस्यनदातव्यंसहदात्रासमज्जति ॥ १६ ॥ यथाभस्मतथामूर्खोविद्वान्प्रज्वलिता
ग्निवत् ॥ होतव्यंचसमृद्धेग्नौजुहुयात्कोनुभस्मनि ॥ १७ ॥ यथाशूद्रस्तथामूर्खःशूद्रस्यैवचभस्मवत् ॥ शूद्रेणसंहसंवेशंदानंमू
र्खेचवर्जयेत् ॥ १८ ॥ गृहीतायोभवेद्विद्वान्सनावारोहकोयथा ॥ आत्मानंतारयंत्तंचनदींवैतारिणींद्विजः ॥ १९ ॥ योमूर्खोपिसदा

चारःषट्कर्मनिरतःसदा ॥ सनयेत्स्वर्गमात्मानंवृद्धांश्चैवनपीडयेत् ॥ २२० ॥ नविद्यानतपोयस्यआदत्तेचप्रतिग्रहम् ॥ आददानस्त्व
नाचारोदातारमपिमज्जयेत् ॥ २१ ॥ तिलान्स्वर्णस्वगांभूमिमविद्वानाददातियः ॥ भस्मीभवतिसोह्वायदातुस्स्यादफलंचतत् ॥
॥ २२ ॥ तस्मादविद्वान्नादद्यादल्पशोपिप्रतिग्रहम् ॥ विपतत्त्वापरिज्ञानीविषेणाल्पेननश्यति ॥ २३ ॥ सर्वंगवादिकंदानंपात्रे
दातव्यमर्चितम् ॥ विद्वद्भिर्नत्वपात्रेषुगतिमिच्छद्भिरात्मनः ॥ २४ ॥ हस्तिकृष्णाजिनाद्यास्तुगर्हितायेप्रतिग्रहाः ॥ सद्भिस्तास्ता
न्नगृह्णीयुर्गृह्णन्तस्तुपतंतिते ॥ २५ ॥ कृष्णाजिनप्रतिग्राहीहयानांशुक्रविक्रयी ॥ नवश्राद्धेषुयोभोक्तानभूयःपुरुषोभवेत् ॥ २६ ॥
योगृह्णातिकुरुक्षेत्रेग्रामंगांद्विमुखींहयम् ॥ नवश्राद्धान्नभुक्पंचवर्ज्यानिर्माल्यवद्द्विजाः ॥ एतेयांत्यंधतामिस्रंयावन्मनुसहस्रकम् ॥
॥ २७ ॥ विष्णोश्चधातुश्चवराहजातपृथ्वीचशंभोश्चमुनीशगौश्च ॥ कालेसुपात्रेविधिवत्प्रदत्ताःप्राप्नोतिलोकत्रयमेतदुक्तम् ॥
॥ २८ ॥ वेदविद्वान्सदाचारःसदातिष्ठतिसंनिधौ ॥ भोजनेचैवदानेचवर्जनीयोनसत्तमैः ॥ २९ ॥ अन्यासनमधीयानंब्राह्म
णंयोव्यतिक्रमेत् ॥ भोजनेचैवदानेचहिनस्त्यासप्तमंकुलम् ॥ २३० ॥ अनृचोपिनिराचाराःप्रतिवेश्मनिवासिनः ॥ अन्यत्रहव्य
कव्यान्यांभोज्यास्युरुत्सवादिषु ॥ ३१ ॥ प्रोक्तप्रतिग्रहाभावेप्राप्तायांबृहदापदि ॥ विप्रोऽन्नप्रतिगृह्णन्वासर्वतोपिचनावभा
क् ॥ ३२ ॥ गुर्वादिपोष्यवर्गार्थंदेवाद्यर्थंचसर्वतः ॥ प्रत्यदेयाद्द्विजाग्र्यस्तुभृत्यर्थंचात्मनोपिच ॥ ३३ ॥ दधिक्षीराज्यमां
सानिगंधपुष्पांत्तुमत्स्यकान् ॥ शय्यासनासनंशाकंप्रत्याख्येयंनकर्हिचित् ॥ ३४ ॥ अपिदुष्कृतकर्मभ्यःसमायातमयाचितम् ॥
पतितेभ्यस्तदातेभ्यःप्रतिग्राह्यमसंशयम् ॥ ३५ ॥ शक्तःप्रतिग्रहीतुंयोवेदवृत्तःसुसंवृतः ॥ दीयमानंनगृह्णातिस्वर्गस्तस्यालपकं

फलम् ॥ ३६ ॥ प्रतिग्रहमृणंचाप्ययाचितंयानयच्छति ॥ सकोटिगुणितग्रस्तोमृतोदासत्वमृच्छति ॥ ३७ ॥ प्रदातानस्मरेद्दा
नंप्रतिग्राहीनयाचते ॥ तावुभौनरकंयातोदाताचापिप्रतिग्रही ॥ ३८ ॥ अपात्रस्यंहियद्दत्तंदानमल्पमपिद्विजैः ॥ ग्रहीताप्रतक्षणा
द्यातिभस्मत्वमविचारतः ॥ ३९ ॥ दानंप्रतिग्रहेकेचिद्वदन्तिमुनयस्सदा ॥ प्रत्यक्षलिंगमेकंस्याद्दातृयाचकयोरिह ॥ २४० ॥
दातुर्हस्तोभवेदूर्ध्वंग्रहीतुश्चभवत्यधः ॥ दातृयाचकयोर्भेदःकराभ्यामेवलक्षितः ॥ ४१ ॥ मूनादीनांचतुर्णांतुतथानिन्दितभूपतेः ॥
नविद्वान्प्रतिगृह्णीयात्प्रतिगृह्णन्व्रजत्यधः ॥ ४२ ॥ दुष्टाद्दशगुणंपूर्वान्मूनद्यांश्चक्रिमयकृत् ॥ वेश्यानिषिद्धनृपतेःप्रतिग्रहपरःक्र
मात् ॥ ४३ ॥ परपाकंवृथामांसंदेवाग्निऋषिदूषितम् ॥ अनुपाकंवृथामांसंनभक्ष्यंलशुनादिकम् ॥ ४४ ॥ नभोक्तव्यमभोज्यान्नं
कंदमूलफलादिकम् ॥ नपातव्यमपेयंचद्विजैरत्यंतगर्हितम् ॥ ४५ ॥ सत्ययुक्तंसदाश्रुत्याच्छनेधर्मंसदाचरेत् ॥ यमान्संनियमान्कु
र्याद्गार्हस्थ्यंव्रतमाचरन् ॥ ४६ ॥ मातापितृनुपाध्यायान्गुरून्वृद्धान्सदार्चयेत् ॥ एतान्वृद्धांस्तथाचान्यान्नित्यंविप्राभिवादयेत् ॥ ४७ ॥
सद्विजानांचसन्मानंदानंदत्तंसदाजनाः ॥ दयध्व-
दमंचसर्वदाकुर्याद्दानंशक्त्यासदैवहि ॥ दयांजंतुषुकुर्वीतनद्दीनोनरकाश्रयः ॥ ४८ ॥
मपिचैवैषाश्रुतिर्वाजसनेयिका ॥ ४९ ॥ यत्रिदकारकंकुर्वंतस्तनयित्नुर्ध्वानंदिवि ॥ ददद्दातिदमंदानंदयामितिवाशिक्षयेत् ॥ २५० ॥
रसारसैःसमाग्राह्यादेयाअपिचनान्यथा ॥ रसैर्नलमणंग्राह्यंसमतोहीननतोपिच ॥ ५१ ॥ तिलाअपिसमादेयाधान्यैरन्यैर्द्विजातिभिः ॥
नतैयंत्रेणनिष्पीड्याद्व्रयुरेनम्मनोर्पिणः ॥ ५२ ॥ विक्रयंव्यपदेशेनदुग्धदध्यादिसर्पिषाम् ॥ लाभात्कुर्याद्द्विजन्मायःसतुशूद्रसमरूयहात् ॥
॥ ५३ ॥ गश्रपांनतिरस्कुर्यादुपास्यान्नावधारयेत् ॥ ननिंद्यसमभ्यर्च्यानविक्रीणीतगर्हितान् ॥ ५४ ॥ अदेयानिनवैदद्यादत्याज्यानिन

वैत्यजेत् ॥ अभाष्यानैवभाषेतहीनांगाद्यांश्चनक्षिपेत् ॥ ५५ ॥ नसंवदेच्चपित्राद्यैःपतिताद्यैर्नसंवसेत् ॥ नमतिंनीचवर्णायदद्यादुच्छिष्ट
मेववा ॥ ५६ ॥ मतिंशूद्रस्ययोदद्यान्नरकंप्रतिपद्यते ॥ नतस्यकिंचिदाख्येयंव्रतादिनियमादिकम् ॥ ५७ ॥ आचक्षाणस्तुतद्धर्मनरका
ग्नौप्रपच्यते ॥ नाद्यादन्नंनिषिद्धंश्चसंध्याशय्यार्धरात्रिषु ॥ ५८ ॥ वेदविद्यादियानानिनविक्रीणीतकर्हिचित् ॥ नापत्यज्ञानिनसंज्ञानिभू
र्तिचान्वयेसति ॥ ५९ ॥ नापःपिबेच्चपाणिभ्यांनकंडूर्यनिकुद्भवेत् ॥ विदिक्प्रत्यगुदक्कस्तुशयीताह्नानसंध्ययोः ॥ २६० ॥ पादु
कादिनपालाशंनवृक्षादिनिकृंतनम् ॥ नोत्सार्यष्ठीवनाद्यंतुनकदाचिद्व्रतादिषु ॥ ६१ ॥ पद्भ्यांस्पृशद्व्रताद्यैर्नोनोच्छिष्टोनचतद्व्रतिः ॥ नलं
घ्यावत्सतंत्र्याद्यावास्वर्गीनांनगगनिः ॥ ६२ ॥ नद्व्योर्विप्रयोर्नाग्न्योसौरभ्योर्नपतिस्त्रियोः ॥ विप्राग्न्योर्विप्रपिंडवानोग्रोक्ष्णोर्विष्णुता
क्ष्र्ययोः ॥ ६३ ॥ सौरभेय्योर्नलाम्याश्चमाहिष्योजलयोरपि ॥ भानुध्योमादिकानांतुनकुर्यादंनरागतिम् ॥ ६४ ॥ भोजनादिषुसक्तानांनप
श्येद्विगतांशुकम् ॥ नगच्छेत्स्त्रीजनैर्युक्तंअश्वीयान्ननयासह ॥ ६५ ॥ उत्तरीयंविनानैवननग्नोनशयीतच ॥ नमेहेच्चैवमार्गादौनानिषिद्धककु
म्मुखः ॥ ६६ ॥ नोपगंगामरार्चादिनविष्ठादिगृहांतिके ॥ अतिकालादियानेचशुभमिच्छन्विवर्जयेत् ॥ ६७ ॥ ज्येष्ठंद्रचापरुद्राद्यामूल
नाम्नानुनिर्दिशेत् ॥ इंद्रचापंधयंनोगौर्माख्यानव्येपरस्यते ॥ ६८ ॥ वर्जयेद्धावनंचैवपादयोःकांस्यभाजने ॥ पैशून्यंमर्मभेदंचनवदेन्म्ले
च्छभाषितम् ॥ ६९ ॥ प्राकृतंचकुशास्त्राणिपाखंडहैतुकानिच ॥ नश्रोतव्यानिविप्रेणयातनाकारणानिच ॥ २७० ॥ नकरंमस्त
केदद्यान्नकरेमस्तकंतथा ॥ नजानुनोःशिरोधार्यनप्रावृतशिराभ्रमेत् ॥ ७१ ॥ वेदाश्वबद्धाश्वकदर्यचौरक्लीबाभिशस्तागणिकातुर्याच ॥
योवृद्धिजीवीगणदीक्षकायेनभोज्यमेषामशनंद्विजेन ॥ ७२ ॥ क्रूरानराःक्रूरचिकित्सकायेयापुंश्चलीयौचविरोधिशत्रू ॥ व्रात्योग्रमर्त्या

मिहिलाजिनाश्चस्यान्नाद्यमेषामशनंद्विजेन ॥ ७३ ॥ येदांभिकायेचसुवर्णकाराउच्छिष्टभोजीपतितश्चयश्च ॥ येविप्रभार्यावहुया
जकायेविप्रस्यचैतेपिनभोज्यधान्याः ॥ ७४ ॥ यःसोमशस्त्रास्त्रकृतोंबुतक्रक्षीराज्यमांसंलवणाजिनानि ॥ क्षौमानिभिक्षान्तिलान्फला
निचिक्रेतुरेषामशनंनभोज्यम् ॥ ७५ ॥ जीवंतिवृत्त्यारसदानपानांकर्मारकायेपिचतंतुवाद्याः ॥ राजानृशंसोरजकःकृतघ्नोभोज्याशनान
वविहिंसकाश्च ॥ ७६ ॥ येतैलधारासुसुराकृतायेपशून्यवाचोवितथंवदाश्च ॥ येवंदिनोयेपिचचाक्रिकाश्चविप्रस्यचैतेपिनभोज्यसंस्थाः ॥
॥ ७७ ॥ मध्वासवंमधूच्छिष्टंदधिक्षीररसौदनाः ॥ मनुष्योपलपूपाश्चकुशमृत्पुष्पवीरुधः ॥ ७८ ॥ कौशेयकेशकुतपाविषनीररसा
स्तथा ॥ शाकैककशफपिण्याकगंधानोषधिमूलकान् ॥ ७९ ॥ विक्रीणंतियएतानिवस्तूनिमनुजाधमाः ॥ तेषामन्नंनभोक्तव्यंसहोपपाति
वेश्मनः ॥ २८० ॥ योपथ्यस्यकदर्यस्यभुंजीतान्नंद्विजाधमः ॥ तत्क्षणाच्छूद्रवत्सस्यान्मृतोविट्शूकरोभवेत् ॥ ८१ ॥ योन्नंवार्द्धुषि
कस्याद्याद्भूजापालादिकस्यच ॥ अन्यस्यापिनिषिद्धस्यसोनिचनरकेवसेत् ॥ ८२ ॥ पाणिगृहीतभार्यायांसत्स्वायंयस्तुनराधमः ॥ शूद्री
हस्तेनभुंजीतपतितःस्यात्तथैवतु ॥ ८३ ॥ त्यक्तायेनोढभार्यातुत्यक्तःसपितृदेवतैः ॥ त्यक्तोदेवैःसपापीयाञ्छूद्रादप्यधमःस्मृतः ॥ ८४ ॥
यःशूद्रींभजतेनित्यंशूद्रीचगृहमेधिनी ॥ वर्जितःपितृदेवैश्चरौरवंयात्यसौद्विजः ॥ ८५ ॥ यःशूद्र्यांचस्वयंजातोयोन्यस्यांवासमुद्भवः ॥
अन्यस्यांवाभवेत्सोपितस्यकिंप्रेत्यचिंतितम् ॥ ८६ ॥ सर्वान्भुंजीतनरकान्विंशतिष्वेकवर्जनात् ॥ रौरवाद्यान्क्रमेणेतान्पापिष्ठोयावदं
बरम् ॥ ८७ ॥ हेमंतेशिशिरतोश्चप्रोष्टपद्याःपरस्यच ॥ पंचस्वपरपक्षेषुकार्याःसाग्निभिरष्टकाः ॥ ८८ ॥ हेमंतेशिशिरेचैकातथैकैकापि
राथवा ॥ प्रोष्ठपद्यांद्विजैस्तिस्रअष्टकाइतिकेचन ॥ ८९ ॥ दर्शश्चपूर्णमासश्चतथैवाग्रयणद्वयम् ॥ चातुर्मास्यव्रतान्येवकार्याणिसाग्निकै

बृ. पा. द्विजैः ॥ २९० ॥ अनूचानकुलेजाताःसदैवव्रतचारिणः ॥ अग्निहोत्ररतानित्यंमातृपित्रादिपूजकाः ॥ ९१ ॥ प्रतिग्रहनिवृत्ताश्चजपहो अ०
मपरायणाः ॥ वृत्तवंतश्चयेविप्राःस्नातकास्तेप्रकीर्तिताः ॥ ९२ ॥ संक्रांतयोऽर्कवारश्चव्यतीपातोयुगादयः ॥ शुभर्क्षदिनयोगाश्चकार्याःसा
॥२९॥ ग्निभिरष्टकाः ॥ ९३ ॥ नशूद्राद्भिक्षितेनैवकर्तव्यंकर्मसद्द्विजैः ॥ चांडालत्वमवाप्नोतियज्ञार्थंशूद्रयाचकः ॥ ९४ ॥ लब्धंयज्ञाययोविप्रो ४
नदद्याद्यज्ञकर्मणि ॥ भासःकाकोथगृध्रोवाश्मशानेनिर्जलेभवेत् ॥ ९५ ॥ शिलोंछवृत्तिर्विप्रःस्यादथवैकाहिकाशनः ॥ द्वित्र्यहिका
शनोवास्यात्कुंभीकुमूलधान्यकः ॥ ९६ ॥ पूर्वपूर्वतरःश्रेयानेषांसद्भिःप्रकीर्तितः ॥ सोमपस्यात्रिवर्षान्नस्तत्पूर्वकृतसमाशनः ॥ ९७ ॥
सोमेष्टिपशुयज्ञांश्चकुर्वीतप्रतिवासरम् ॥ इष्टिर्वैश्वानरीयातुकर्तव्यैतदसंभवे ॥ ९८ ॥ सत्यामर्थस्यसंपत्तौनकुर्याद्धीनदक्षिणाम् ॥
तत्कृतंतुभवेद्व्यर्थंप्राप्नुयात्पशुयोनिताम् ॥ ९९ ॥ श्रद्धापूतंप्रदातव्यंपात्रेदानंसमर्चितम् ॥ याचितेनापिदातव्यंश्रद्धापूतंधनंनरैः ॥
॥ ३०० ॥ शूद्रान्नंब्राह्मणोश्नन्वैमासंमासार्द्धमेववा ॥ तद्योनावेवजायेतसत्यमेवंविदुर्बुधाः ॥ १ ॥ आशूदरस्थशूद्रान्नोमृतःश्वा
चोपजायते ॥ दशद्वादशचाष्टौवागृध्रशूकरपुल्कसाः ॥ २ ॥ उदरेस्थितशूद्रान्नोयोधीयानोपिनित्यशः ॥ जुह्वन्वापिजपन्वापिगति
मूर्ध्वांनविंदति ॥ ३ ॥ अमृतंब्राह्मणस्यान्नंक्षत्रियान्नंपयःस्मृतम् ॥ वैश्यस्यत्वन्नमेवान्नंशूद्रस्यरुधिरंस्मृतम् ॥ ४ ॥ आमंशूद्रस्यशूद्रान्नं
पक्वमुच्छिष्टमुच्यते ॥ तस्मादामंतपक्वंचशूद्रस्यपरिवर्जयेत् ॥ ५ ॥ कणभिक्षांनिराकुर्याद्यदिकुर्यादवृत्तिकः ॥ सच्छूद्राणांगृहेकुर्वन्नत
द्दोषेणलिप्यते ॥ ६ ॥ विशुद्धान्वयसंभूतोनिवृत्तोमद्यमांसतः ॥ द्विजभक्तोवणिग्वृत्तिःससच्छूद्रःप्रकीर्तितः ॥ ७ ॥ उदक्यास्पृष्टसंघु ॥२९॥
ष्टंवीक्षितंचाप्युदक्यया ॥ श्वस्पृष्टंशकुनोच्छिष्टंप्रयत्नेनविवर्जयेत् ॥ ८ ॥ उच्छिष्टंचपदास्पृष्टंशुक्तंचपतितेक्षितम् ॥ पर्युषितंचिरस्थं

चकेशकीटादिदूषितम् ॥ ९ ॥ पंत्तयुच्छिष्टंगवाघ्रातंप्रयत्नेनाविवर्जयेत ॥ नाश्नीरन्नेतदंशनंशमिच्छंतोद्विजातयः ॥ ३१० ॥ शूद्राणाम
पिभोज्यान्नाःस्फुर्यसिनापितादयः ॥ सस्नेहमशनंभोज्यंचिरस्थमपियद्भवेत् ॥ ११ ॥ अनाक्ताअपिभोज्याःस्युःसद्यःश्रितंयवादयः ॥
गर्भिण्यवत्समृतक्यागवादेर्वर्जयेत्पयः ॥ १२ ॥ स्त्रीणामेकशफोष्ट्रीणांतथारण्यकमाविकम् ॥ प्रसूताब्राह्मणीगौश्चमहिष्योऽजास्तथै
वच ॥ १३ ॥ दशरात्रेणशुद्ध्यंतिभूमिसंस्थंनवंपयः ॥ शाकादिकंचाविज्ञातंकवकानिचवर्जयेत् ॥ १४ ॥ मांसंकीटादिभिर्जुष्टंप्रयत्ने
नपरित्यजेत् ॥ येवयः क्रव्यमश्नंतितथाविष्टाभुजश्चये ॥ १५ ॥ शुकटिट्टिभदात्यूहाःकपोतापिकसारिकाः ॥ सेधाद्यांश्चपंचनखान्सिहा
द्यान्मत्स्यकांस्तथा ॥ १६ ॥ धर्मशास्त्रादितोनाद्यात्सर्पाकारांश्चवर्जयेत् ॥ भक्ष्यंप्राणात्ययेमांसंश्राद्धयज्ञोत्सवेष्वपि ॥ १७ ॥ यत्र
वातत्रवाकालेनाद्यंत्वविधिनामिषम् ॥ यद्देवामिषसंपत्तिस्तथैवामंत्रयेद्द्विजान् ॥ १८ ॥ कृत्वाचविधिनाश्राद्धंपश्चात्तत्स्वयमश्नुते ॥ नां
द्यादविधिनामांसंमृत्युकालेपिधर्मवित् ॥ १९ ॥ भक्षयेन्नरकेतिष्ठेत्पशुरोमसमाःसमाः ॥ गृहस्थोपिहियोनाद्यात्पाशितंतुकथंचन ॥
॥ ३२० ॥ ससाक्षात्साधुभिःप्रोक्तोयोगीचब्रह्मलोकगः ॥ नस्वयंतुपशुंहन्याच्छ्राद्धकालेप्युपस्थिते ॥ २१ ॥ क्रव्याद्यैःसारमेयाद्यैर्हतं
पश्वादिकंहरेत् ॥ इदंशाकवदिच्छंतिपवित्रंमुनिसत्तमाः ॥ २२ ॥ समर्थोयस्ययस्यस्यादन्नंदहातिर्देहिनः ॥ सतद्दत्तिनिगृतंकोलोकेदृष्टं
निगद्यते ॥ २३ ॥ अन्नादेरपिभक्ष्यस्यस्नेहमद्यामिषस्यच ॥ महाफलानिवृत्तिःस्यात्प्रवृत्तिःस्वर्गसाधना ॥ २४ ॥ एकोब्दशतमश्वेन
यजेतपशुनाद्विजः ॥ नाश्वस्तुमांसमश्नातिस्वर्गप्राप्तिस्तयोःसमा ॥ २५ ॥ हेमराजतशंखानांपात्राणांवेणवस्यच ॥ चर्मणोरजवस्त्राणां
शुद्धिर्भवतिवारिणा ॥ २६ ॥ स्फाटिनांयज्ञपात्राणांयान्यानांवाससामपि ॥ अन्येषांचयरूपाणांप्रोक्षणाच्छुद्धिरिष्यते ॥ २७ ॥ मार्जे

नान्मखपात्राणांहस्तेनमखकर्मणि ॥ अंभोजमंत्रकैरुष्णैःशुध्यतःकौशिकाविके ॥ २८ ॥ श्रीफलैराशुपदानांसास्तैःकुतपस्यच ॥ मृ
न्मयानिपुनःपाकैःक्षौमाणिसितसर्षपैः ॥ २९ ॥ शुध्येतकारुहस्तस्थंपण्यंशुद्धंप्रसारितम् ॥ भैक्ष्यस्यप्रोक्षणाच्छुद्धिःसंस्पृष्टिःस्यान्न
यत्रतु ॥ ३२० ॥ स्त्रीमुखंतुसदाशुद्धंभूमिर्लेपविवर्जिता ॥ अपरादहनाद्यैश्चगृहंमार्जनलेपनैः ॥ ३१ ॥ द्रव्याणिचैवशुद्ध्यंतिव
ह्निनाप्लवनेनच ॥ क्रव्यादाद्यैर्हतंमांसंसर्वदाशुचिकीर्तितम् ॥ ३२ ॥ तृतिकृत्सौरभेय्याश्चस्वभावस्थंमहीगतम् ॥ वदंतिसूरयो
ग्यपवित्रमितिसर्वदा ॥ ३३ ॥ गौर्वह्निर्भानवश्छायाजलमश्वंवसुंधरा ॥ विप्रपोमक्षिकावायुर्नदुष्यंतिकदाचन ॥ ३४ ॥ शुचिः
प्रस्रवणेवत्सस्तथाजाश्वौमुखेशुची ॥ नतुगोर्मुखतोमेध्यानचगोमुखजामलाः ॥ ३५ ॥ सोमभास्करयोर्भाभिःपथःशुद्धिःप्रकीर्तिता ॥
ओष्ठाधरमुखंश्मश्रुसस्नेहंभोजनादनु ॥ ३६ ॥ नदुष्टंऋत्विजःप्राहुःस्त्रीवृद्धशिशुरोगिणाम् ॥ स्नात्वाभुक्त्वाप्रपीत्वाचक्षुत्वासुत्वा
तथैवच ॥ ३७ ॥ गत्वारथ्यादिकेपुंसांशुद्धिराचमनेनच ॥ नापोमूत्रपुरीषाभ्यांनाग्निर्दहनकर्मणा ॥ नस्त्रीदुष्यंतिचारेणब्राह्मणोवे
दकर्मणा ॥ ३८ ॥ पद्माश्मलोहेफलकाष्ठचर्मभांडेस्थितोदैःस्वयमेवशौचात् ॥ पुंसांनिशास्वप्नंनिचासखानांस्त्रीणांचशुद्धिर्विहितास
दापि ॥ ३९ ॥ नभसःपंचदश्यांचपंचम्यांचतथापरे ॥ नभस्यस्यचतुर्दश्यामुपाकर्मयथोदितम् ॥ ३४० ॥ तद्विदःकेचिदिच्छंतिनभसः
श्रवणेनतत् ॥ हस्तेनवाथपंचभ्यामध्यायानांवदंतितत् ॥ ४१ ॥ योयच्छाखोपनीतःस्याद्ब्रह्मचारीद्विजोत्तमः ॥ तच्छाखाविहितंतस्य
उपाकर्मादिकीर्त्यते ॥ ४२ ॥ अतोवेदाधिकारित्वंवेदपाठस्यकथ्यते ॥ अनुपाकृतविप्रादेर्वेदाध्ययनदुष्कृतिः ॥ ४३ ॥ मुंजोपवीताजिन
दंडकाष्ठंत्याज्यंनतत्स्याव्रतचारिणांतु ॥ अक्लिष्टमेकेव्रतलोपपापेसंस्कारमन्यंपुनरर्हयेयुः ॥ ४४ ॥ ओषधीनांतुसद्भावेस्वशाखाविहितं

हिनम् ॥ रोहिण्यांचैवहस्तस्यउपाकर्मणिकुर्वता ॥ ४५ ॥ नभवेदनुपाकर्माब्राह्मणःस्नातकोद्विजः ॥ कर्मच्युतोभवेद्व्रात्योव्रात्योनिष्कृ
तिकृच्छ्रुचिः ॥ ४६ ॥ अथातःस्यादनध्यायोमृतगुर्वादिपुन्यहम् ॥ निर्घातादिष्वहोरात्रमधीत्यारण्यकश्रुतीः ॥ ४७ ॥ अष्टकासुतथा
द्वितीयांपूर्णिमायांशशिक्षये ॥ मन्वादौयुगपक्षादाविंद्रपानोच्छ्रयेपिच ॥ ४८ ॥ चातुर्मास्यद्वितीयायांचतुर्दश्यामहर्निशम् ॥ अहोरात्रं
नृपेसंस्थेत्रातिनिःश्रेत्रियेयतौ ॥ ४९ ॥ अत्रत्र्यहमनध्यायमिच्छंतिचापरिग्रहम् ॥ आशौचेमृतकाश्वितुयावच्छुद्धिस्तयोर्भवेत् ॥ २९० ॥
देशांतरगतेप्रेतेश्रुतेपिस्यादहर्निशम् ॥ गुर्वादौचनृपस्यादौइतिवाशिष्टजोत्रवीत् ॥ ५१ ॥ प्रतिगृह्यत्वहोरात्रंभुक्त्वाश्राद्धिकमेवच ॥
तज्ज्ञाःब्रुयुरनध्यायमृतुसंधावहर्निशम् ॥ ५२ ॥ पश्चाद्यैरनरायातेरहोरात्रंविदुर्बुधाः ॥ अकालगर्जितेवृष्टावग्निदाहेचसत्तम ॥ ५३ ॥
स्वनेषुदुःखितानांचखरादीनांचनिःस्वने ॥ पतितःशवशूद्रांत्यसन्निधानेनकीर्तयेत् ॥ ५४ ॥ आत्मन्यशुचिदेशेतुविद्युत्स्तनितसंदिते ॥
मृतेचकलहदेशेविप्लवेलोकविड्वरे ॥ ५५ ॥ पांसुवर्षेपुमध्येचत्वग्दाहग्रामदाहयोः ॥ नीहारेचभयेविद्वान्संध्ययोरुभयोरपि ॥ ५६ ॥ धा
वंश्चनपठेद्विद्वान्पूतिगंधेतथैवच ॥ विशिष्टेचागतेगेहंगात्रामृज्ञनिर्गमेनथा ॥ ५७ ॥ भोजनायोपविष्टस्यउच्छिष्टस्यार्द्रपाणिनः ॥ वांत
स्यत्रेनथाजीर्णेमहारात्रेतिमारुते ॥ ५८ ॥ रजोवृष्टौचयानादौआरूढस्तुतथाद्विजः ॥ भवंतिसकलास्तस्यवेदाःप्रोक्तफलप्रदाः ॥ ५९ ॥
येचैतेषुपठंत्यज्ञाःपाठलोभेनलोभिताः ॥ नशाश्वताभवेद्विद्यानिष्फलाचैवजायते ॥ ३६० ॥ यःपठेद्विधिवद्विद्वांसयतींद्रियसंयमी ॥
ब्रह्मत्वमिहलोकेपिसुखमैश्वर्यमश्नुते ॥ ६१ ॥ जनानांशृण्वतांमार्गेगच्छन्यस्तुपठेद्द्विजः ॥ निष्फलास्तस्यवेदाःस्युर्वेदविप्लववदोषभाक् ॥
॥ ६२ ॥ यःपठेत्स्वरहीनंचलक्षणेनविवर्जितम् ॥ संकीर्णग्राममध्येतुसभवेद्वेदविप्लवी ॥ ६३ ॥ यस्त्वाध्यायमधीयीरन्ननध्यायेषुलोभ

तः ॥ वज्ररूपेणतेमंबामूर्ध्नितेपापतंतिहि ॥ ६४ ॥ नाक्रामेदमरादीनांछायांचपरयोषितां ॥ वांतष्ठीवनविण्मूत्रकपांसास्थि
कपालिकाम् ॥ ६५ ॥ नावज्ञेयाःकदापिस्युर्नृपविप्रोरगादयः ॥ श्रियंचाजन्मआकांक्षेन्नस्पृशेन्मर्कटस्यचितं ॥ ६६ ॥ नी
त्यावर्तेतसततंधर्मार्थौचसदार्जयेत् ॥ नकंचित्ताडयेद्धीमान्सुतंशिष्यंचनाडयेत् ॥ ६७ ॥ ताडयेन्नाभितोधस्तान्ननदन्यत्रकर्हि
चित् ॥ आचारेणसदाविद्वान्वर्तेनयोजितेंद्रियः ॥ सब्रह्मपरमभ्येतिवरेण्योमुत्रचेहच ॥ ६८ ॥ आचारमूलंश्रुतिशास्त्रवित्तमाचा
रशाखाश्चतदुक्तकृत्यम् ॥ आचारपर्णानिहिनान्नियोगआचारपुष्पाणियशोयुगानि ॥ ६९ ॥ आचारवृक्षस्यफलंहिनाकस्तस्मात्सुखा
दर्थफलंहिमुक्तिः ॥ तस्मादनंतंफलदंसहितंस्वाचारमेवाश्रययन्नपूर्वम् ॥ ३७० ॥ येधर्मशास्त्रेविहिताश्चकेचिद्धर्माद्विजाग्र्यैरपिते
चसर्वे ॥ यत्नेनकार्याःपितृदेवभक्तैःश्राद्धाधिकार्याण्यथतानिवक्ष्ये ॥ ३७१ ॥ यत्नेनधर्मोगृहमेधिविप्रैर्वितेनवावपुषाचकार्यः ॥
आयुःप्रजाःश्रीर्जनपूजितत्वंलभेततस्माद्दिविदेवभोगान् ॥ ३७२ ॥ ॥ इतिबृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांचतुर्थोऽ
ध्यायः ॥ ४ ॥ ॥छ॥ श्राद्धंवृद्धावचंद्रेभच्छायाग्रहणसंक्रमे ॥ व्यतीपातेचविषुवेकृष्णेपांत्रार्थलब्धिषु ॥ १ ॥ अष्टकास्वयने
द्वंद्वेश्राद्धंप्रतियदारुचिः ॥ पुण्यःश्राद्धस्यकालोयमृषिभिः परिकीर्तितः ॥ २ ॥ युगादिषुचकर्तव्यंतथामन्वंतरादिषु ॥ कथितःश्राद्ध
कालोयंमन्वाद्यैर्धर्मवक्तृभिः ॥ ३ ॥ नवान्नेनचतोयेननवच्छत्रगृहेतथा ॥ नवेक्षवेषुवांछंतिपितरोमिमघास्वपि ॥ ४ ॥ काणःपौन
र्भवोरोगीपिशुनोवृद्धिजीवकः ॥ कृतघ्नोमत्सरीक्रूरोमित्रध्रुक्कुनखीगदी ॥ ५ ॥ वृद्धोप्रजननःश्वित्रीश्यावदंतावकीर्णिनः ॥ हीनांग
श्चातिरिक्तांगो विक्लवःपरिविंदकः ॥ ६ ॥ क्लीबाभिशस्तवाग्दुष्टभृतकाध्यापकास्तथा ॥ कन्यादूषीवणिग्वृत्तिर्विनाग्निःसोमविक्रयी ॥ ७ ॥

भार्याजितोऽनपत्यश्चकुंडाशीकुंडगोलकौ ॥ पित्रादित्यागकृत्स्नेनवृषलीपतितन्नकाः ॥ ८ ॥ अनुक्तवृत्तिस्त्वज्ञातःपरपूर्वापतिस्तथा ॥
अजापालोमाहिषकःकर्मदुष्टाश्चनिंदिताः ॥ ९ ॥ योमत्प्रतिग्रहग्राहीनित्यंयश्चप्रतिग्रही ॥ ग्रहमूचकदूतौचपितृकार्येषुवर्जिताः ॥ १० ॥
प्रेतस्पृक्तैलनिर्णेक्तावहुयाजकयाचकौ ॥ बककाकविडालाश्चशूद्रवृत्तिश्चगर्हितः ॥ ११ ॥ वाग्दुष्टोबालदुष्टोवान्त्यिमप्रियवाक्यः ।
आसक्तोद्यूतकामादावतिवाक्षैवदूषितः ॥ १२ ॥ निगचाराश्चयेविप्राःपितृमातृविवर्जिताः ॥ विद्वांसोपिनतेभ्यर्च्याःपितृश्राद्धेषु
मानवैः ॥ १३ ॥ नवेदैःकेवलैर्वापिनपसाकेवलेनवा ॥ सद्वृत्तैरेवसाप्रोक्तापात्रताब्राह्मणस्यच ॥ १४ ॥ यत्र वेदास्तपोयत्रयत्रवृत्तंद्विजा
ग्रजे ॥ पितृश्राद्धेषुतंयत्नाद्विद्वान्विप्रंसमर्चयेत् ॥ १५ ॥ वेदशास्त्रार्थविच्छांतःशुचिर्धर्ममनाःसदा ॥ गायत्रीब्रह्मचिताकृतिपनृश्राद्धे
पुपावनः ॥ १६ ॥ रथंतरबृहज्ज्येष्ठसामवित्रिसुपर्णकः ॥ त्रिमधुश्चाग्नियोविप्रःपितृश्राद्धेसपूजितः ॥ १७ ॥ मातामहश्चदौहित्रोभा
गिनेयोमातुलस्तथा ॥ मातृष्वस्रेयतश्चैवचनथामातुलपुत्रकः ॥ १८ ॥ जामाताश्वशुरोबंधुर्भार्याभ्राताचतत्सुतः ॥ सुत्रनाश्चसदाचा
राएतेश्राद्धेषुपावनाः ॥ १९ ॥ ऋत्विग्गुरुरुपाध्यायआचार्यःश्रोत्रियोपरः ॥ एतेश्राद्धेषुसंपूज्याज्ञातिसंबंधिबांधवाः ॥ २० ॥ अग्नि
होत्रीचयोविप्रआवसथ्याग्निकोपिवा ॥ पितृमातृपरावेत्तौभोक्तव्यौहव्यकव्ययोः ॥ २१ ॥ कृष्येकवृत्तिर्जीवीयेभक्तोमात्रादिकेषुच ॥
षट्कर्मनिरतःपूज्योहव्येकव्येषुसर्वदा ॥ २२ ॥ क्षत्रवृत्तिसमाचारोमात्रादिभक्तितत्परः ॥ शुचिःषट्कर्मयुक्तश्चहव्यकव्येसंपूजितः ॥
॥ २३ ॥ इत्युक्तगुणसंपन्नान्ब्राह्मणान्पूर्ववासरे ॥ निमंत्रयेत्तनान्भक्त्यानियोगाख्यानपूर्वकम् ॥ २४ ॥ सव्येनदैवतार्थंचापित्र्यर्थमपसव्य
वान् ॥ चरितव्यंततस्तैःस्यादुक्तंपितृत्रतैर्द्विजैः ॥ २५ ॥ जितेंद्रियैस्तुभाव्यैःस्यादहोरात्रमतंद्रितैः ॥ तस्मिन्नहनिप्रीतवायत्रश्रा

॥३२॥

द्धमुपास्थितम् ॥ २६ ॥ निमंत्रयेततान्भक्त्यातैश्चभाव्यंजितेंद्रियैः ॥ विप्रोरःपार्श्वपृष्ठस्थाःपितृमातामहादयः ॥ भुञ्जतेक्रमशः
श्राद्धेतथापिंडाशिनोपिच ॥ २७ ॥ निमंत्रितोद्विजःश्राद्धेनशयीतस्त्रियासह ॥ अध्वानंतुनवैयायान्नब्रूयादनृतंवचः ॥ २८ ॥ नाधीयीत
दिवास्वापंनकुर्वीतचसंवदेत ॥ नम्लेच्छपतितैःसार्द्धनवेदंचनिषिद्धकैः ॥ २९ ॥ प्राङ्मुखौदैविकौविकौविप्रास्त्रयउदङ्मुखाः ॥
एकैकोवोभयत्रस्यादसंपत्तावितिक्रमः ॥ ३० ॥ पात्रंवादैविकंकृत्वाविप्रएकस्तुपैतृकः ॥ इतिवानिर्वपेच्छ्राद्धंनिर्धनश्चान्यदाचरेत् ॥
॥ ३१ ॥ गत्वारण्यममानुष्यमूर्ध्वबाहुर्विरौत्यदः ॥ निरन्नोनिर्धनोदेवाःपितरोमानृणंकृथाः ॥ ३२ ॥ नमेस्तिवित्तंनगृहंनभार्याश्राद्धं
कथंवःपितरःकरोमि ॥ वनेप्रविश्येहरुतंमयोच्चैर्भुजौकृतौवर्त्मनिमारुतस्य ॥ ३३ ॥ श्राद्धर्णमेतद्भवतांप्रदत्तंमह्यंदयध्वंपितृदेवताद्याः ॥
आख्यायचोत्क्षिप्यभुजाविदेच दिनंचरात्रिंसमुपोष्यतिष्ठेत ॥ ३४ ॥ भवेन्नरस्तेनकृतेननतेषामृणेनमुक्तःपितृदेवतानाम् ॥ निर्वृत्तानिभार्य
निराश्रयाणांश्राद्धस्यमार्गोगदितोमुनींद्रैः ॥ ३५ ॥ मयाख्यातंरुदित्वाचपितरःश्राद्धदेवताः ॥ श्राद्धार्णस्यविमुक्तोहमहतास्ते
चवैमया ॥ ३६ ॥ कृतोपवासस्तत्राह्निश्राद्धर्णान्मुच्यतेद्विजः ॥ एतच्चापिनयःकुर्यात्पितरस्तेनवैहताः ॥ ३७ ॥ संपत्तावर्घपात्राणामे
केकस्यत्रयस्त्रयः ॥ पित्रादेर्ब्राह्मणाःप्रोक्ताश्चत्वारोवैश्वदेविकाः ॥ ३८ ॥ द्वौचापिदैविकेप्रोक्तावेकैकोवानदोषभाक् ॥ स्यान्मातामहिके
प्येवमेकोपिवैश्वदेविके ॥ ३९ ॥ नत्वेवैकंतुसर्वेषामाप्ययनमतःस्थितम् ॥ पितॄणामर्चयेद्विप्रंमंत्रपिंडानिदर्शनम् ॥ ४० ॥ नमा
तामहिकंश्राद्धंश्रौतमुक्तंतुसाग्निकैः ॥ अनग्निकस्तुतत्कुर्यादितिकेचिन्मतंविदुः ॥ ४१ ॥ साग्निकैरपिकर्तव्यंश्राद्धंमातामहंद्विजैः ॥ षट्
दैवत्यामितिह्येकएकेतुपार्वणद्वयम् ॥ ४२ ॥ अपुत्रस्यापितृव्यस्यतत्पुत्रोभ्रातृजोभवेत ॥ सएवतस्यकुर्वीतपिंडदानोदकक्रियाम् ॥ ४३ ॥


॥३२॥

पार्वणंतेनकार्यंस्यात्पुत्रत्वाद्भ्रातृजेनतु ॥ पितृस्थानेषुतत्कृत्वाशेषंपूर्ववदुच्चरेत् ॥ ४४ ॥ श्राद्धंपत्न्यापिकार्यंस्यादपुत्रायाश्चयोषितः
तस्यापिहितयाकार्यमेकत्वंहितयोर्यतः ॥ ४५ ॥ भ्रातुर्ज्येष्ठस्यकुर्वीतसज्येष्ठोप्यनुजस्यच ॥ देवहीनंतुतत्कुर्यादितिधर्मविदब्रवीत् ॥ ४६ ॥
पितुःपुत्रेणकर्तव्याःपिंडदानोदकक्रियाः ॥ पुत्राभावेतुपत्न्यापितदभावेसहोदरैः ॥ ४७ ॥ मित्रादीनांचकर्तव्यंसमीहंतेयतोप्यमी ॥ नाव
ज्ञेयास्तुतेसर्वेकृतेतुस्यान्महाफलम् ॥ ४८ ॥ पितामहस्तदन्योवायस्यजीवन्भवेद्द्विजः ॥ प्रत्यक्षास्तेपिपूजाःसंस्थित्यर्थेयतश्चतत् ॥ ४९ ॥
विद्यमानस्त्रयाणांस्यात्प्रत्यक्षःपूज्यएवसः ॥ गौतमस्यमतेचैतदितिवासिष्ठजोऽब्रवीत् ॥ ५० ॥ विद्यमानेतुपितरिश्राद्धंकर्तुमुपस्थितः ॥
पितृव्यत्पितृपित्रादेःकुर्याच्छ्राद्धमसंशयम् ॥ ५१ ॥ पुत्रिकायाः सुतःश्राद्धंनिर्वदेन्मातुरेवसः ॥ तत्पितुर्निर्वपेत्पश्चात्तृतीयंतुपितुःपितुः ॥
॥ ५२ ॥ अतएवद्विजःपुत्रींसुद्वहेन्नकथंचन ॥ उद्वोढुःपुत्रपुत्रोसौमातुरेवाहिपुत्रकः ॥ ५३ ॥ पुत्रश्चदुहितुःपुत्रःसमौतौधार्मिकेपथि ॥
अथोभौतावविप्रोक्तौतुल्यौतौशक्तिजोब्रवीत् ॥ ५४ ॥ कुर्याद्यथापितुःश्राद्धंतथामातामहस्यच ॥ पुत्रदौहित्रयोर्लोकेविशेषोनोपप
द्यते ॥ ५५ ॥ दौहित्रः पावनःश्राद्धेकालस्तुकुतपःस्मृतः ॥ तथाकृष्णास्तिलास्त्रिद्धानितिश्राद्धविदोविदुः ॥ ५६ ॥ काम्यमाभ्युदयं
चैवद्विविधंपार्वणंस्मृतम् ॥ यथाकामंतुकाम्यंस्याद्वृद्धावाभ्युदयंस्मृतम् ॥ ५७ ॥ क्षत्रियायांतुयोजातोवैश्यायांतुतथासुतः ॥ ब्राह्मणस्य
पितुस्तौतुनिर्वपेतांद्विजान्यवत् ॥ ५८ ॥ क्षत्रियस्यसुतश्चैवतथावैश्यसुतोपिवा ॥ शृतान्नेनाद्विजांस्तर्प्यश्राद्धद्वयंचनिर्वपेत् ॥ ५९ ॥
आमान्नेनतुशूद्रस्यतूष्णींचद्विजपूजनम् ॥ श्राद्धंकृत्वातुनिर्वाप्यसजातीनाशयेदथ ॥ ६० ॥ यःशूद्रोभोजयेद्विप्रांश्छूतपाकाशनेनतु ॥
सतद्विप्रकृतैनोभिर्लिप्यतेशक्तिजोब्रवीत् ॥ ६१ ॥ शूद्रःपाकंद्विजेभ्यश्चविभवाद्योददातियः ॥ कृमिर्भवतिविष्ठायांसयुगान्येकविंशतिम् ॥

॥ ६२ ॥ भोजितेनतुविप्रेणयत्पापंतस्यजायते ॥ तेनासौलिप्यतेमूढोयः शूद्रोभोजयेद्द्विजान् ॥ ६३ ॥ यःशूद्रोभोजयेद्विप्रांश्छृतपाके
नदुर्मतिः ॥ सगच्छेन्नरकंघोरंपुनरावृत्तिवर्जितम् ॥ ६४ ॥ यत्किंचित्किल्बिषंविप्रैःकृतपूर्वंतुतिष्ठति ॥ तेनासौलिप्यतेपापीयःशूद्रोभोजये
द्द्विजान् ॥ ६५ ॥ शूद्रान्नंयोद्विजोभुंक्तेमतिपूर्वंद्विजाधमः ॥ कृमित्वंयातिविष्ठायांसयुगान्येकविंशतिम् ॥ ६६ ॥ शूद्रोच्छिष्टंतुयोभुंक्तेपं
चाहानिद्विजोत्तमः ॥ तद्विष्ठायांकृमित्वंसप्राप्नोतिचशतंसमाः ॥ ६७ ॥ अतोनभोजयेद्विप्रंनिर्वापेनैवपूजयेत् ॥ आद्दानंभोजनाद्युक्तमिति
पाराशरोब्रवीत् ॥ ६८ ॥ नभोजयेत्स्त्रियंश्राद्धेयद्यपिब्रह्मचारिणी ॥ द्विजन्मानोपिकुर्वीरञ्छ्राद्धमामाशनेनतु ॥ ६९ ॥ यदैवस्युःप्रवास
स्थाभार्यायत्रससन्निधौ ॥ व्यवधानेनभार्यायाग्रहणेपुत्रजन्मनि ॥ ७० ॥ कुर्यादामाशनंश्राद्धमितिपाराशरोब्रवीत् ॥ अग्नौकरणपिंडां
श्चकुर्यादामाशनेनतु ॥ सतिलैर्दधिमध्वाज्यसंपृक्तैःसक्तुभिरपि ॥ ७१ ॥ यवाद्यंसंस्कृतान्नेनद्रव्यंवापिचनिर्वपेत् ॥ जलेनपयसावापिन
स्यादश्राद्धकृद्यथा ॥ ७२ ॥ आमान्नेनद्विजैःकार्यंनकदाचिदपिद्विजाः ॥ श्रपयित्वाविनैकोस्तुतथापिपाकमाश्रयेत् ॥ ७३ ॥ नकुर्या
त्परपाकेनकार्यंपिंडविवर्जितम् ॥ नैकःश्राद्धद्वयंकुर्यान्नचकुर्यात्परान्नभुक् ॥ ७४ ॥ पित्रादीनांसगोत्रांयेतथामातामहस्यच ॥ तेषामेके
नपाकेनकार्योपिण्डविवर्जितम् ॥ ७५ ॥ केचित्सपिण्डमिच्छंतिसमगोत्रतयानघ ॥ अपिमातामहोनस्याद्भिन्नगोत्रतयातथा ॥ ७६ ॥ पृथक्क
र्तुमशक्यत्वादर्घपात्राद्यसंभवे ॥ अवश्यंतद्धि कर्तव्यमेकदैवतमाश्रयेत् ॥ ७७ ॥ येषांनोद्वाहसंस्काराअन्यसंस्कारसंस्कृताः ॥ सांक
ल्पिकंभवेत्तेषां श्राद्धंकार्यंमृताहनि ॥ ७८ ॥ केचित्सपिण्डमिच्छंतिब्रह्मसंस्कारवत्तया ॥ आद्योहिब्रह्मसंस्कारस्तस्मात्पिण्डःप्रदीयते
॥ ७९ ॥ पर्वस्वपिनिमित्तेषुकर्तव्यंपिण्डसंयुतम् ॥ पितृणांहित्रिधायस्माद्तृप्तिःप्रोक्तामुनीश्वरैः ॥ ८० ॥ वैश्वदेवःकदाकार्यःश्राद्धकालउप

स्थिते ॥ पाकशुद्ध्यर्थमेवैतत्पूर्वमेवाविधीयते ॥ ८१ ॥ वैश्वदेवोग्रतस्तस्माच्छ्राद्धकालेविशेषतः ॥ पाकशुद्धिस्तुविज्ञेयामुक्तोच्छिष्टं
तुवर्जयेत् ॥ ८२ ॥ संप्राप्तेपार्वणश्राद्धेएकोद्दिष्टेतथैवच ॥ अग्रतोवैश्वदेवःस्यात्पश्चादेकादशेहनि ॥ ८३ ॥ एकोद्दिष्टेविशेषेणप्रागेवद्विजभोजनम्
जनम् ॥ कालस्तुकुतुपस्तस्यरौहिणःपार्वणस्यच ॥ ८४ ॥ आसनेत्वासनंदद्याद्वामेवादक्षिणेपिवा ॥ पितृकार्येषुवामंतद्दैवेकर्मणिदक्षिणम् ॥
॥ ८५ ॥ पितृकार्येषुयोदद्याद्दक्षिणेदर्भमासनम् ॥ नाश्नंतिपितरस्तस्यसार्धानिवत्सराणिषट् ॥ ८६ ॥ तस्माद्वामतएवात्रपितृकर्मणिचासनम् ॥
दैविकेदक्षिणंतद्वदितिवासिष्ठजोब्रवीत् ॥ ८७ ॥ कुत्रकालेप्रकर्तव्यंश्राद्धंतत्पैतृकंप्रभो ॥ वेदस्यनिश्चयंतत्रकदत्तंचाक्षयंभवेत् ॥ ८८ ॥
पंचदशमुहूर्तोहस्तत्प्रागर्धंदिनंस्मृतम् ॥ अपराह्णस्मृतंरात्रिस्तन्मध्यंकुतपोमतः ॥ ८९ ॥ यथायथाचह्रस्वत्वंपुंसश्छायेनसोभवेत् ॥
तथातथापवित्रःस्यात्कालःश्राद्धार्चनादिषु ॥ ९० ॥ छायायांपुरुषस्यैनस्तत्पादार्धोभवेद्यदा ॥ आधानश्राद्धदानादेः सकालःक्षयकृत्स्मृ
तः ॥ ९१ ॥ अयुतंतुमुहूर्तानांवर्णोष्टशतसंयुतम् ॥ त्रिंशद्भिस्तैरहोरात्रमितिमाध्यंदिनीश्रुतिः ॥ ९२ ॥ मध्याह्नेतुगतेसूर्येनपूर्वेनचप
श्चिमे ॥ तुलाग्रसंस्थितेचैवसोष्टमोभागउच्यते ॥ ९३ ॥ मध्याह्नाच्चलितोभानुःकिंचिन्मंदगतिर्भवेत् ॥ सकालोरौहिणोनामपितॄणांदत्त
मक्षयम् ॥ ९४ ॥ तस्मात्सर्वप्रयत्नेनरौहिणंतुनलंघयेत् ॥ अकालेविधिनादत्तंनदेवपितृगामितत् ॥ ९५ ॥ अब्दवृद्धिर्भवेद्यत्रतत्रांब्द
मुभयात्मकम् ॥ श्राद्धंतत्रप्रकुर्वीतमासयोरुभयोरपि ॥ ९६ ॥ नवंध्यंदिवसंकुर्यान्मासयोरुभयोरपि ॥ पिंडवर्ज्यमसंक्रांतिसंक्रांतेपिंड
संयुतम् ॥ ९७ ॥ षष्टिभिर्दिवसैर्मासस्त्रिंशद्भिःपक्षउच्यते ॥ संक्रांतिरहितःपक्षस्तत्रकार्यमपिंडकम् ॥ ९८ ॥ सिनीवालीमतिक्रम्ययं
दासंक्रमतेरविः ॥ युक्तःसाधारणेमासैःसकालउत्तरोभवेत् ॥ ९९ ॥ संक्रांतिवर्जितःकालःसमलःपापसंभवः ॥ रक्षसांभागधेयोसावुत्स

वादिषुवर्जितः ॥ १०० ॥ तत्रनैत्तिकंश्राद्धंकार्यंपिंडविवर्जितम् ॥ नित्यंतुसकलंकार्यमितिपाराशरोब्रवीत् ॥ १ ॥ अहोभिर्गणितैर्यं
तस्यात्तत्कार्यंतत्रसर्वदा ॥ तिथिनक्षत्रयोगाश्चजातकर्मादिकाश्चये ॥ २ ॥ नैमित्तिकाश्चयेचान्येकार्यास्तेवैमलिम्लुचे ॥ तीर्थस्नानंगज
च्छायादिमुखीगोप्रदानवत् ॥ मलिम्लुचेपिकर्तव्यंसपिंडीकरणादिकम् ॥ ३ ॥ आग्रायणममावास्यामष्टकाग्रहसंक्रमम् ॥ अधिमासे
पिकार्यंस्यादितिशक्तिसुतोब्रवीत् ॥ ४ ॥ नित्यंचनित्यश्रंःकार्यमिष्टीःकाम्याश्चवर्जयेत् ॥ वार्षिकोपिंडवर्ज्यःस्यांद्न्यस्मिन्पिंडसंयुतम्
॥ ५ ॥ इष्टीराग्रयणंश्राद्धमन्वाहार्यंचसर्वदा ॥ कर्तव्यंसर्वदाविप्रैरिष्टीःकाम्याश्चवर्जयेत् ॥ ६ ॥ दैवेकर्मणिसंप्राप्तेतिथौयत्रोदितोरविः ॥
सातिथिःसकलाज्ञेयाविपरीतातुपैतृके ॥७॥ वृद्धिमहिवसेकार्यंश्राद्धमाभ्युदयंद्विजाः ॥ क्षीयमाणदिनेकुर्याच्छ्राद्धंविद्वान्क्षयादिकम् ॥ ८ ॥
मैत्रेचैवसगोत्रेचपितृमातृसहोदरे ॥ आसनंनैवदातव्यंभोक्तव्याएवमेवते ॥ ९ ॥ ब्राह्मणंनसगोत्रंचपूजयेत्पितृकर्मणि ॥ नोपातिष्ठतितत्तृ
प्तिंकिंतुस्याच्चनिराशता ॥ ११० ॥ सगोत्रंभोजयेद्यस्तुपितृश्राद्धेषुवैद्विजः ॥ हताःस्युःपितरस्तेननभुक्तंफलदंभवेत् ॥ ११ ॥ श्राद्धंकुर्वन्द्वि
जोज्ञानात्सगोत्रंयस्तुभोजयेत् ॥ सलुप्तपितृदेवःसन्नरकंप्रतिपद्यते ॥ १२ ॥ तस्मान्नगोत्रिणंविप्रंभोजयेद्विधिपूर्वकम् ॥ सज्ञातिमध्येभो
ज्यःस्यादुच्छ्रितैस्तुद्विजोत्तमैः ॥ १३ ॥ दक्षिणाप्रवणेदेशेश्राद्धंकुर्वीतपैतृकम् ॥ पितॄणांवाचनोद्देशःस्प्रोक्तोक्षयतृप्तिकृत् ॥ १४ ॥ देशे
कालेन्नपात्रेचविधिनाहविषाचयत् ॥ तिलैर्दर्भैश्चमंत्रैश्चश्राद्धंस्याच्छ्रद्धयायुतम् ॥ १५ ॥ अर्घार्थंभोजनार्थंचपात्राणितैजसानिच ॥ मृत्पा
षाणमयान्येकेविदुरन्येपराणिच ॥ १६ ॥ पलाशपद्मपत्राणिननिषिद्धानियानितु ॥ श्राद्धेषुतानिकार्याणिपात्राणिभोजनार्घयोः ॥ १७ ॥
वृद्धिश्राद्धेषुमन्यंतेमृन्मयानितुकेचन ॥ शौनकस्यमतंचैतद्यथाकार्यंतुमृन्मयम् ॥ १८ ॥ एकद्रव्याणिकार्याणिभोजनार्घयोरपि ॥ त्री

णिपैतृकपात्राणिद्वेद्वेवैश्वदेविके ॥ १९ ॥ एकंस्यवैश्वदेवानिपैतृकाण्यन्यवस्तुतः ॥ इतिवातानिकार्याणिभेदमेकत्रवर्जयेत् ॥१२०॥ वटा
श्वत्थार्कपत्रेषुकुंभीतिंदुकयोरपि ॥ कोविदारकरंजेषुनभुंजीतकदाचन ॥२१॥ नजातीकुसुमैर्विद्वान्बिल्वपत्रैश्चनार्चयेत् ॥ सुरभीनागकर्णा
द्यैर्हैयारिकांचनारकैः॥२२॥बिल्वैर्यश्चार्चयेद्विद्वान्पितृश्राद्धेतिगर्हितः ॥ तद्भुंजतेसुराःश्राद्धेनिराशाःपितृभिर्गतैः ॥२३॥ सर्वाणिरक्तपुष्पाणि
निषिद्धान्यपराणिच॥वर्जयेत्पितृकार्येषुकेतकीकुसुमानिच॥२४॥गोरंभाभृंगराजाद्यैर्मल्लिकाकुब्जकैरपि॥ समर्चयेद्द्विजाञ्छ्राद्धेहव्यकव्या
दितोद्विजः ॥ २५ ॥ नदद्याद्गुग्गुलंश्राद्धेद्विजानांपितृदैवते ॥ धूपाभावेगुडोदेयोघृतधूपोद्विजोत्तमैः॥ २६ ॥कुंकुमंचंदनंवर्ज्यंदेयंगंधावि
मिश्रितम् ॥ ऊर्ध्वंचतिलकंकार्यंनैवकुर्यात्त्रिपुंड्रकम् ॥ २७ ॥ ऊर्ध्वंचतिलकंकार्यंदेवेपित्र्येचकर्मणि ॥ निराशाःपितरोयांतिदृष्ट्वाविप्रं
त्रिपुंड्रकम् ॥ २८ ॥ पवित्रंयदिवादर्भंकरेकृत्वाद्विजान्नरः ॥ समालभेतदुर्बुद्धिस्तच्छ्राद्धमासुरंभवेत् ॥ २९ ॥ गंधांश्चविधिनादेयाः
कर्पूरागुरुमिश्रिताः ॥ शक्त्यावस्त्राणिदेयानितदभावेचनिष्क्रयम् ॥ १३० ॥ दीपश्चसर्पिषादेयास्तिलतैलेनवापुनः ॥ नकाष्ठतैलैरन्यैर्वा
कदाचित्सार्षपात्तसैः ॥ ३१ ॥ देशधर्मसमाश्रित्यकुलधर्मंतथापरे ॥ सूरयःश्राद्धमिच्छंतिपार्वणंतुमृताहनि ॥ ३२ ॥ स्त्रीणामपि
पृथक्श्राद्धंतेमन्यंतेस्वधर्मतः ॥ मातामहस्यगोत्रेणमातुस्तेनसापिंडता ॥ ३३ ॥ मातामह्यासहेच्छंतिमातुस्तेनंसपिंडताम् ॥ स्त्रीणां
स्त्रीगोत्रसंबंधात्पुंगोत्रेणनृणांयतः ॥ ३४ ॥ सपिंडीकरणेकालेश्राद्धद्वयमुपस्थितम् ॥ देवाद्यंप्रथमंकुर्यात्पितृणांतदनंतरम् ॥ ३५ ॥ देवा
द्यंपार्वणंप्रोक्तंप्रेतश्राद्धमथापरम् ॥ एकत्वंतुततःपश्चात्कृत्वाविप्रांश्चभोजयेत् ॥ ३६ ॥ येसमानाइतिद्वाभ्यांपूर्ववच्छेषमाचरेत् ॥ सपिं
डीकरणंयस्यकृतंनस्याद्द्विजन्मनः ॥ ३७ ॥ अदैवंतस्यतद्देयंपिंडमेकंतुनिर्वपेत्॥ सपिंडीकरणंचैवक्रियाश्चैवक्षयाहिकम् ॥ ३८ ॥ एकाद

श्राद्दिकंत्वाद्यंमासिमासिचंमासिकम् ॥ वर्षेवर्षेचकर्तव्यंमृताहानिचतत्पुनः ॥ ३९ ॥ नापुत्रस्यसापिंडत्वंकेचिदिच्छंतितद्विदः ॥ विशेष
तोनपत्यस्यसत्यपुत्राधिकारिणि ॥ १४० ॥ विद्यमानःपितायस्यसचेद्यदिविपद्यते ॥ तदंतरासापिंडत्वंवदंतिश्राद्धवेदिनः ॥ ४१ ॥ आभ्यु
दयिकसंप्राप्तावर्वागेवतुकारयेत् ॥ कुर्यात्परिव्रजन्नेतत्स्वयंचापिद्विजोत्तमः ॥ ४२ ॥ संन्यसन्सर्वकर्माणितच्छ्राद्धानिचतद्दिने ॥ अग्नि
दाहदिनंचैकेकेचिन्मृतदिनंविदुः ॥ ४३ ॥ विदेशस्थेश्रुताहस्तुकृष्णावाद्वादशीसिता ॥ संग्रामेसंस्थितानांचप्रेतपक्षेशशिक्षये ॥ तेषां
पार्वणमेवोक्तंक्षयाहेपिचसत्तमाः ॥ ४४ ॥ चंद्रक्षयानाग्नकसंयुगेषुयःप्रेतपक्षेमृतवान्सपिंडः ॥ सापिंडतानंतरमाब्दिकानिभवंतितेषामिह
पार्वणानि ॥ ४५ ॥ अग्निसर्पादिभृत्यूनांषण्मासेपरिसत्क्रियाः ॥ क्षयाह्निकानिकार्याणिब्रूयुर्धर्मविदोजनाः ॥ ४६ ॥ अब्दादूर्ध्वं
वदंत्येकेकृत्वावैवैष्णवंबलिम् ॥ कृष्णार्चनंविनानावाक्प्रदत्तमुपतिष्ठति ॥ ४७ ॥ विद्युतावृक्षपातेनसर्पेणमाहिषेणच ॥ इत्यादिकेनमृत्युः
स्यात्तिथौयत्रचतत्रच ॥ ४८ ॥ तन्निमित्तस्यकर्तव्यंमासिमासिक्षयाह्निकम् ॥ कर्तव्यमवधौयावत्ततःकुर्वीतसत्क्रियाम् ॥ ४९ ॥ आना
शकमृतानांतुमृताहेपार्वणंभवेत् ॥ संन्यासविधिमन्यंतेकेचिद्विदुरवैदिकम् ॥ १५० ॥ एकोदिष्टमदैवंस्यात्तथैकार्घ्यपवित्रकम् ॥ आ
वाहनाग्नौकरणरहितंत्वपसव्यवत् ॥ ५१ ॥ पूर्वोत्तरप्लवेदेशेश्राद्धंस्यान्मातृपूर्वकम् ॥ सितपीतादिपिष्टेनचर्चितेभूतलेचतत् ॥ ५२ ॥
उद्दिष्टंकृत्यकालस्यतत्प्रागेवविधीयते ॥ आभ्युदयिकदैवानिपूर्वाह्णेस्युरितिश्रुतिः ॥ ५३ ॥ तिलाक्षतोदकैर्युक्तान्यासनानिप्रदक्षिणम् ॥
परिहृत्यादिपिष्टेनकृत्यंशांतिकपूर्वकम् ॥ ५४ ॥ व्रीहयोयवगोधूमाअक्षताश्चाक्षताःस्मृताः ॥ अक्षतामलकैःपिंडान्दधिकर्कंधु ॥२९॥
मिश्रितैः ॥ ५५ ॥ नांदीमुखेभ्योदेवेभ्यः प्रदक्षिणकुशासनम् ॥ पितृभ्यस्तन्मुखेभ्यश्चप्रदक्षिणमितिस्मृतम् ॥ ५६ ॥ कर्कंधुभिर्यवैर्माषैः

शमीपत्रैस्तिलैरपि ॥ अर्घ्यस्तेभ्यः प्रदातव्योपितृभ्योदैवतैःसह ॥ ५७ ॥ मातामहानामप्येवंषट्दैवत्यंचरेद्द्विजः ॥ मांगल्य
पूर्वकंसर्वगंधाद्यापिचदापयेत् ॥ ५८ ॥ तृप्तिकृत्पितृमातॄणांधूपोदेयश्चगुग्गुलुः ॥ घृताभिंघारधूपोवायथास्यात्परिपूर्णता ॥ ५९ ॥ दीपा
श्चबहवोदेयाःप्रतिविप्रंघृतेनतु ॥ तैलेनयेनकेनापिनवर्नातेनचैवहि ॥ १६० ॥ मालत्याःशतपत्र्यावामल्लिकाकुब्जयोस्तथा ॥ केतक्या
पाटलंयावास्रजोदेयान्नलोहिताः ॥ ६१ ॥ वासांसिचयथाशक्त्यादद्यात्तेभ्योप्यनिष्क्रयम् ॥ परिपूर्णयथातत्स्यात्तथाकार्यंद्विजाति
भिः ॥ ६२ ॥ सुवेषभूषणैस्तत्रसालंकारैस्तथानरैः ॥ कुंकुमाद्यनुलितांगैर्भाव्यंतुब्राह्मणैःसह ॥ ६३ ॥ स्त्रियोपिस्युस्तथाभूतागोतनृ
त्यादिहर्षिताः ॥ दुंदुभीनादहृष्टांगामंगलस्वनकारिकाः ॥ ६४ ॥ सोमसदोग्निष्वात्ताश्चतथाबर्हिषदोपिच ॥ सोमपाश्चतथाविद्वंस्तथैवचह
विर्भुजः ॥ ६५ ॥ आज्यपाश्चतथावत्सस्तथाह्यन्येसुकालिनः ॥ एतेचान्येपिपितरःपूज्याःसर्वेद्विजाग्रजैः ॥ ६६ ॥ वसवश्चतथारुद्रास्तथैवादि
तिसूनवः ॥ देवताअपियज्ञेषुस्वायंभुवादिकीर्तिताः ॥ ६७ ॥ एतेचापितरोदिव्यास्तथाचैतत्सुतादयः ॥ एतत्पौत्राःप्रपौत्राश्चसंख्याताःपि
तरोमताः ॥ ६८ ॥ एतेश्राद्धेषुसंतर्प्यामुन्यन्नाद्यैर्द्विजादिभिः ॥ इमेसंतर्पिताःसर्वान्प्रीणयंतिनृणांपितॄन् ॥ ६९ ॥ यथोक्तंकेतितान्विप्रान्स्ना
तान्कालेसमागतान् ॥ दत्त्वार्घान्कृतपच्छौचानाचांतानुपवेशयेत् ॥ १७० ॥ येस्पृशंतस्तुखान्यद्भिराचामंतीपिबंतिच ॥ नतेफलंजायंतेतृ
तिरायामंत्यसृजाहिते ॥ ७१ ॥ सर्वाणिखानिवक्त्राणिकार्यच्छिद्राणिचात्मनः ॥ तैराचांतैर्भवेच्छुद्धिस्त्वन्यथाप्यशुचिर्भवेत् ॥ ७२ ॥
व्याहृत्यवैष्णवान्मंत्रान्स्मृत्वाचसर्वमातरम् ॥ शांतस्वांतोद्विजान्पृच्छेत्करिष्येश्राद्धमित्यथ ॥ ७३ ॥ करवैकरवाणीतिपृष्टाब्रूयुर्द्विजा
स्ततः ॥ अनुज्ञातवचोह्येतत्कुरुष्वाक्रियतांकुरु ॥ ७४ ॥ ततोदर्भासनंदद्याद्देवेभ्यःसयकंपुनः ॥ दक्षिणंजानुमन्वास्यतत्क्षणंचतदासनम् ॥

॥ ७५ ॥ पात्रद्वयमतोर्घार्थंतैजसंचैकवस्तुजम् ॥ सासनंसपवित्रंतत्समभ्यर्च्यंविधानतः ॥ ७६ ॥ प्राङ्मुखोऽमरतीर्थेनशन्नोदेव्युदकं
क्षिपेत् ॥ यवोसीतियवांस्तंत्रतूष्णींपुष्पाणिचंदनम् ॥ ७७ ॥ यवोसिपुण्यामृतनामीश्रितोसिसमस्तधान्यप्रभुरस्यमुत्र ॥ मरुन्मनुष्य
पितृदेवतानांधरावतीर्णोसिहितोसिपुंसाम् ॥ ७८ ॥ उत्पाद्यपूर्वकमिमानमृतेनवेधाभूयःप्रसन्नमनसातदुपासितोसि ॥ चिक्षेपतान्वरुण
लोकहितायसिक्तास्तेनामृतावरुणदैवतकाबभूवुः ॥ ७९ ॥ आनीतवान्विधिरिमान्वरुणस्यलोकादन्नप्रभून्भुवियवान्सुरलोकतृप्त्यै ॥ तत्पि
ष्टपक्वहविषापितृदेवतानांतृप्तावसंतितिदिवितेवरदानवाचः ॥ १८० ॥ ततःसव्यंकरंन्यस्यविप्रदक्षिणजानुनि ॥ देवानावाहयिष्येहामिति
वाचमुदीरयेत् ॥ ८१ ॥ आवाहयेत्यनुज्ञातोविश्वेदेवासआगतः ॥ विश्वेदेवाःशृणुतेममितिमंत्रद्वयंपठेत् ॥ ८२ ॥ सोमेनसह
राज्ञेतिकेचित्पठंत्यदोपिच ॥ व्याहृत्यमंत्रमावाह्यहस्तेदत्वापवित्रकम् ॥ ८३ ॥ तमर्चयेद्द्विजंपुष्पैर्दद्यादर्घ्यंकरेपुनः ॥ विश्वेभ्य
स्त्वेवदेवेभ्यएषवोर्घ्यःप्रदीयते ॥ ८४ ॥ यादिव्याइतिमंत्रेणपाणौविप्रस्यतांक्षिपेत् ॥ अपसव्यमतःकुर्यान्निर्वर्त्यवैश्वदेविकम् ॥ ८५ ॥
आपोभूमिगताःकेचिद्यादिव्येत्यभिमंत्र्यच ॥ पुनस्ताभिःकराभ्यांचकुर्वीतमुखमार्जनम् ॥ ८६ ॥ उदकंगंधपुष्पाणिवासांसि
चंदनंस्रजः ॥ दत्वापसव्यवद्भूत्वादद्यात्पितृंकुशासनम् ॥ ८७ ॥ सोदकान्द्विगुणीभूतान्सतिलान्सकुशानपि ॥ गोकर्णमात्रका
न्साग्रान्प्रदद्याद्वामपार्श्वतः ॥ ८८ ॥ चतुर्थ्यंतंसगोत्रंचपितृनामचशर्मवत् ॥ उच्चार्यपरयोस्तद्वदिदंतुभ्यंकुशासनम् ॥ ८९ ॥ पित्रर्थमर्घ्य
पात्राणिसंपूज्यदक्षिणामुखः ॥ तिलोसीत्येतदुच्चार्ययवस्थानेतिलान्क्षिपेत् ॥ १९० ॥ भूलग्नसव्यजानुःसन्पितृतीर्थेनवात्वरः ॥ पितृध्यान
मनाःकुर्यात्पितृध्यानमशेषतः ॥ ९१ ॥ आवाहयिष्येपित्रादीननुज्ञावाहयेतिच ॥ उशंतस्त्वेतिप्रोदीर्यतथायंतुनइत्यपि ॥ ९२ ॥ अन्ये

प्यपहतासुराइत्याद्यपिपठंतिहि ॥ अन्नविघ्नव्यपोहार्थंवक्तव्यमितिकैरपि ॥ १३ ॥ प्राग्वद्विप्रार्चनंकार्यंप्राग्वदर्घ्यप्रसेचनम् ॥ प्राग्वन्मंत्रंस
मुच्चार्यप्राग्वत्स्यात्सुसमार्जनम् ॥ १४ ॥ एतेतिलास्तुविधिनाशाश्विलोकतस्तुप्राहत्यभूजनाहितेचशुभायधान्याः ॥ क्षिप्तामलानिपुरुषस्य
चतर्पणार्थैर्येघ्नंतितेषुभुविसत्सुकुतोभयंस्यात् ॥ १५ ॥ तिलोसिचंद्रामृतदैवतोसिहितोसितृप्त्यैपितृदेवतानाम् ॥ कर्तासित्वंसिपरमापि
तृणामुक्तस्ततस्त्वंविधिसंभवोसि ॥ १६ ॥ पवित्राणिचसर्वाणिकृत्वातान्यादिपात्रके ॥ पितृभ्यःस्थानमसीतिन्युब्जंकुर्यादधश्चतत् ॥ १७ ॥
यस्तूद्धरेत्तदज्ञानादर्घ्यपात्रंतुपैतृकम् ॥ तद्धिश्राद्धमभोज्यंस्यात्क्रुद्धैःपितृगणैर्गतैः ॥ १८ ॥ आश्रित्यप्रथमंपात्रंतिष्ठंतिपितरोनृणाम् ॥
श्राद्धेतस्मान्नतद्विद्वानुद्धरेत्प्रथमंसुधीः ॥ १९ ॥ वाचयेत्परिपूर्णत्वंवासोदत्वाविधानतः ॥ अस्त्वेतत्परिपूर्णंतुब्रूयुरेतद्द्विजातयः ॥ २०० ॥
ससर्पिरन्नमादायसपिधानंद्विजाग्रतः ॥ भूत्वासर्वान्द्विजान्पृच्छेत्करिष्येग्नावितिद्विजः ॥ १ ॥ कुरुष्वेतिह्यनुज्ञातोनुहोत्यग्नौततःपुनः ॥
भोजनेपितृपात्राणामितिमंत्रमुदीरयेत् ॥ २ ॥ अग्निशब्दंचतुर्थ्येकवचनांतंसमुच्चरेत् ॥ क्रव्यवाहनशब्दंचसोमंपितृमदित्यपि ॥ ३ ॥
पंक्तिमूर्धन्यमेवात्रपृच्छेदितिहकेचन ॥ पितृश्राद्धप्रधानत्वात्सामगानथवापुनः ॥ ४ ॥ तृतीयंमनसादद्याद्यमायस्त्वेतिवापुनः ॥ तूष्णीं
यत्रतुहोमादौप्रजापतिस्तुतत्रंतु ॥ ५ ॥ अहव्यवाहितस्मिन्वाक्संवादोभून्ननोगिरा ॥ अहव्यवाग्यतोवाण्याअभूद्यज्ञप्रजापतेः ॥ ६ ॥ अग्ना
वाहुतयःप्रोक्तास्तित्रएवमनीषिभिः ॥ अग्निवद्द्विजपात्रेषुपश्चात्तज्जुहुयाद्द्विजः ॥ ७ ॥ अग्नौकरणशेषंतुपितृपात्रेषुदापयेत् ॥ प्रतिपाद्य
पितृणांतुदद्याद्वैश्वदेविकम् ॥ ८ ॥ यत्राग्नौकरणंदद्यात्तदाविप्रकरेषुच ॥ तेनोच्छेषितमेतत्स्यात्सम्प्राप्तिस्तावदेवतु ॥ ९ ॥ पितरःकरव
क्त्रास्तुवह्निवक्त्रास्तुदेवताः ॥ अन्नंपाणौनतद्दद्यंपात्रेदेयंकुशान्विते ॥ २१० ॥ वैश्वदेविकविप्राणांपात्रेवायदिवाकरे ॥ अंनमग्निकस्तुतद्द्यात्प्र

वृ. पा. ॥३७॥

थमवैश्वदेविकम् ॥ २११ ॥ हुतशेषमशेषाणांपात्रेदद्याद्द्विजोत्तमः ॥ पृच्छेत्सर्वांश्चयत्कृत्यसामान्येनद्विजोत्तमान् ॥ १२ ॥ दत्वाग्नौकरणंचान्येविप्राणांतृप्तिकृद्धविः ॥ परंदेयमितिब्रूयुस्ततोविधिरनंतरः ॥ १३ ॥ प्रागग्नौकरणंदत्वादद्यादन्यच्चतत्प्रतिकृत ॥ एकीकृतंतुभुंजानाःप्रीणयंतिनृणांपितॄन् ॥१४॥ परिवेष्यहविःसर्वतदर्थयज्ञंतच्छृतम् ॥ अभिमंत्र्यततःपात्रमपोशानप्रदानवत् ॥१५॥अन्नपूर्णस्यपात्रस्यकर्तव्यमभिषेचनम् ॥ आपोदत्वातुसंकल्प्यएषश्राद्धविधिर्वरः॥१६॥ वर्जितानिनदेयानिपितॄणांतृप्तिमिच्छता ॥ हविष्याणिप्रदेयानिवक्ष्यमाणानिवर्जयेत् ॥१७॥ निष्पावराजमाषाणुकुलित्थान्कोरदूषकान् ॥ मसूरान्भीतपाकंचपुलकंशणमर्कटा ॥१८॥आढक्यसितासिद्धार्थवल्लनिस्विन्नधान्यकम् ॥ पिण्याकंपरिदग्धंचमथितंचाविवर्जयेत् ॥ १९ ॥ नापिनीरसनिर्गंधकरंजंसर्वमुक्तकम् ॥ अप्रोक्षितंचयत्किंचित्पर्युषितंविवर्जयेत् ॥ २२० ॥ लोहितान्वृक्षनिर्यासान्प्रत्यक्षलवणानिच ॥ कृतकृष्णानिलवणंसर्वाःफलांडुजातयः ॥ २१ ॥ कृष्णजीरकवंशाग्रंभूतृणानिविवर्जयेत् ॥ कुंभीकमुकपालंक्यकट्फलंतंडुलीयका ॥२२॥ नालिक्यंचसमच्छत्रासौभांजनकुसुंभिकाः ॥ कोविदारंकरंजौचसुषुष्वामूलकंतथा ॥ २३ ॥ कूष्मांडंगौरवार्ताकंबृहत्याश्वफलानिच ॥ करीरफलपुष्पाणिविडंगमरिचानिच ॥ २४॥ जंवारिकासजंवीरासमृज्जावीजपूरकाः ॥ जम्वलाबूनिपिप्पल्यःपटोलींपिंडमूलकम् ॥ २५ ॥ मसूरांजनपुष्पंचददच्छ्राद्धेपतत्यधः ॥ विषच्छन्नहतंमांसमन्यच्चचिरसंस्थितम् ॥ २६ ॥ नित्थंश्राद्धेविवर्ज्यस्यादिड्डराहचकोरयोः ॥ स्वायंभुवादिभिःसर्वैर्मुनिभिर्यमदर्शिभिः ॥ निषिद्धानिनदेयानिपितृणामहितानिच ॥ २७ ॥ एकेनकिंचिच्चपरेणकिंचित्किंचिच्चकिंचिच्चपरैर्मुनींद्रैः ॥ श्राद्धेनिषिद्धान्यशनानिविप्रैस्ततःपितॄणांनतुकिंप्रदेयम् ॥ २८ ॥ सौवीरनिंबैलवणादिकैस्ततत्पाकस्यशुद्धिर्भवतीहयैस्तु ॥ तद्वीजपूरान्मरिचादियोगात्सिद्धंप्रदेयं ॥३७॥

अ० ६

नतुदुष्यतीति ॥ २९ ॥ श्राद्धंतुयस्यद्विजदीयमानंपित्रादिकंस्येहभवेन्मनुष्यैः ॥ यद्वस्तुतस्येहमनस्यभीष्टमासीत्पुरातस्यतदेवदेय
म् ॥ २३० ॥ ज्ञातुश्चयस्मिन्मनसोभिलाषःश्रद्धाभवेद्यस्तुदीयमाने ॥ श्राद्धेषुदेयंविधिवत्तदेवतद्दत्तमक्षय्यमितिश्रुतिश्च ॥ ३१ ॥
आनीतमंभोनिशियत्कथंचिद्यत्पाणिदत्तंभवतीहविद्वन् ॥ हेमांबुनिक्षेपहरिस्मृतिभ्यामच्छिन्नतामेतिपराशरोक्तेः ॥ ३२ ॥ यत्क्षीरसारैक्ष
वखंडयोगाच्छाकाभिधेयंभवतीहविद्वन् ॥ प्राण्यंगधूपान्मरिचादियोगात्पाकंस्थसिद्धंप्रवदंतितज्ज्ञाः ॥ ३३ ॥ व्रीहयोयवगोधूमामुद्गामा
षास्तिलाअपि ॥ नीवारश्यामकाद्यंचअकृष्टंभवानिच ॥ ३४ ॥ आरण्यकालशाकादिप्रातिषिद्धापराणिच ॥ माहेयीक्षीरमध्वादि
खड्गादिपिशितानिच ॥ ३५ ॥ शर्करागुडखंडादिसंशुद्धंक्षौद्रमेवच ॥ पितृश्राद्धेहविर्मुख्यंयद्वातद्वाप्यलाभतः ॥ ३६ ॥ यद्देहिनामत्र
शरीरपुष्ट्यैधातासमर्जाशननामकिंचित् ॥ तत्तत्स्वधान्यान्नमितित्रिधैवभूचेमुनींद्रेणपराशरेण ॥ ३७ ॥ श्यामांबराद्यादिककंतुजातिर्य
त्किंचिदस्मिस्तुषसाररूपम् ॥ अरण्यजंवाकृषिसंभवंवासस्यंतदुक्तंमुनिनाद्विजेषु ॥ ३८ ॥ कांडोद्भवंयत्त्वशनेषुकिंचित्पंकोद्भवंवास्थ
लसंभवंवा ॥ यत्तुच्छसारंबहुसारमस्मिन्सर्वाणिधान्यानिवशूकदंति ॥ ३९ ॥ यत्सर्वसारंतुषवचभक्ष्यंनिःशूकशूकान्वितमत्रकिंचित् ॥
आप्यायनंदेहभृतातुसद्यस्तदुक्तमाद्यैरशनेषुचान्नम् ॥२४०॥ प्रतिश्रुतंचशूक्तंचकटुतिक्तंचयत्रयम् ॥ केचिदूचुरदेयानिप्रोत्खातप्रातिरोपि
च ॥ ४१ ॥ तुंडीरकान्यलाबूनिलिंगाख्यानिचयानिच ॥ श्राद्धेनित्यमदेयानिप्राहसत्यव्रतीपतिः ॥ ४२ ॥ सोंकारयाचगायत्र्यादशाव
र्तितयाजलम् ॥ पूतंतुतेनतत्प्रोक्ष्यंसर्वमन्नंविशुद्धये ॥ ४३ ॥ शुद्धवत्यथकूष्मांड्यःपावमान्यस्तरत्समाः ॥ पूतेनवारिणैताभि
रन्नशोधनमुत्तमम् ॥ ४४ ॥ तद्विष्णोरितिमंत्रेणगायत्र्याचप्रयत्नवान् ॥ प्रोक्षयेदशनंसर्वंशूद्रदृष्टंचापिशुद्धये ॥ ४५ ॥ गृहा

ग्निशिशुदेवानांयतीनांब्रह्मचारिणकम् ॥ तावन्नदीयतेकिंचिद्यावत्पिंडान्ननिर्वपेत् ॥ ४६ ॥ कांजिकंदधितक्रंचशृतंचाशृतमेववा ॥
पूर्वाह्णेनप्रदातव्यमेकोद्दिष्टेथपार्वणे ॥ ४७ ॥ आपिंडदानतोदद्यात्किंचिच्छ्राद्धवासरे ॥ तेनैवपितरोयांतिश्राद्धंमूर्ध्नीतनैवच ॥ ४८ ॥
परिवेषयेत्समंसर्वंपंक्तिभेदंनकारयेत् ॥ पंक्तिभेदीवृथापाकीनित्यंब्राह्मणनिंदकः ॥ ४९ ॥ आदेशीवेदविक्रेतापंचैतेब्रह्मघातकाः ॥ यद्येकपंक्तयांविषमंददातिस्नेहाद्भयाद्वायदिवार्थलोभात् ॥ वेदेषुदृष्टंमुनिभिश्चगीतंतद्ब्रह्महत्यासदृशंवदंति ॥ २५० ॥
देवान्पितॄन्मनुष्यांश्चवह्निमभ्यागतांस्तथा ॥ अनभ्यर्च्यचभुंजानोवृथापाकइतिस्मृतः ॥ ५१ ॥ पृथ्वीतेपात्रमित्येतद्योरपीतिपिधानकं
एतद्वैब्राह्मणस्यास्येजुहोमिचामृतेमृतम् ॥ ५२ ॥ इदंविष्णुरितिह्यन्नंमंत्रमुच्चार्यचापरे ॥ द्विजांगुष्ठंतुतत्रान्नेनिवेशयंतितद्विदः ॥ ५३ ॥
जप्त्वाव्याहृतिभिःसार्धंगायत्रींमधुमतीरपि ॥ संकल्प्यान्नमपोशानंब्रूयाच्चमधुमाध्विति ॥ ५४ ॥ आपोशानंप्रदायान्नंनतत्संकल्पयेद्विजः ॥ संकल्पान्नरकेयातिनिराशैःपितृभिर्गतैः ॥ ५५ ॥ आपोशानोदकेविप्रपाणौतिष्ठतियोद्विजः ॥ संकल्पंकुरुतेमोहात्स्युस्तेनपितरोहताः ॥५६॥ जप्त्वाचवैष्णवान्मंत्रान्विप्रान्ब्रूयाद्यथासुखम् ॥ भुंजीरन्वाग्यतास्तेतुपितृदेवाहितैषिणः ॥५७॥ तदुष्णमश्नीयात्कार्यं
वाचावाच्यंपितृप्रियम् ॥ शूद्रांश्चसूकरश्वर्क्षकुक्कुटानपनीयच ॥ ५८ ॥ भुंजतेब्राह्मणायावत्तावत्पुण्यंजपंजपेत् ॥ पावमान्यश्चवाक्यानि
पितृवाक्यानिचैवहि ॥ ५९ ॥ ततस्तृप्तान्द्विजान्पृच्छेत्तृप्ताःस्थेत्यनुशासनम् ॥ तृप्ताःस्मेतिद्विजाब्रूयुस्तदन्नंविकिरेद्भुवि ॥ २६० ॥ सकृत्सकृदपोदत्वाशेषमन्नंनिवेदयेत् ॥ यथानुज्ञातथाकृत्वापिण्डांस्तदनुनिर्वपेत् ॥६१॥ यद्यद्भुक्तंद्विजैरन्नंतत्तदादायवित्वरः ॥ स्थालीपाकतिलोपेतंदक्षिणाभिमुखस्ततः ॥ ६२ ॥ अथतेज्यातिलान्दर्भान्पिण्डार्थमवनीतले ॥ तस्मिंश्चनिर्वपेत्पिडान्गोत्रंकामकपूर्वकान् ॥६३॥

येदेवलोकंपितृलोकमापुःप्राप्तास्तथैवंनरकंनरांये ॥ अग्नौहुतेनद्विजभोजनेनतृप्यंतुपिण्डैर्भुवितेप्रदत्तैः ॥ ६४ ॥ यदन्नंलेपरूपंतुकमात्ते
षुचनिर्वपेत् ॥ प्रक्षाल्यसलिलंवारिअवनेजनवत्पुनः ॥ ६५ ॥ निपृतानर्चयेत्पिण्डान्पुष्पगंधविलेपनैः ॥ दीपवासःप्रदानेनपितॄन्पितृ
न्ध्यायन्समाहितः ॥ ६६ ॥ वासोवस्त्रदशांदद्याद्विधिवन्मंत्रपूर्वकम् ॥ कश्चिदत्राविकंलोमकेचिन्मतंनवदिति ॥ ६७ ॥ अंशमितिवा
वार्षिकोयस्तुदद्याल्लोमस्वमंशुकम् ॥ तच्चावश्यंप्रदेयंस्याद्विधिसंपूर्णताकृते ॥ ६८ ॥ पवित्रंयदिवादर्भकरात्तत्रविनिक्षिपेत् ॥ प्रक्षाल्य
हस्तावाचम्यप्रोक्षणादिकमाचरेत् ॥ ६९ ॥ निर्वपेत्त्वपरेपिण्डान्प्रागेवद्विजभोजनात् ॥ खादयेयुःशकुंतास्तान्पितॄणांप्रीतितत्पराः ॥
॥ २७० ॥ मातामहानामप्येवंविप्रानाचामयेदथ ॥ वाचयेतद्विजान्स्वस्तिदद्याच्चैवाक्षयोदकम् ॥ ७१ ॥ दक्षिणाहेमदेवानांपितॄणांरजतं
मतम् ॥ शक्त्यादद्यात्स्वधाकारंव्याहरेच्छ्राद्धकृद्द्विजः ॥ ७२ ॥ निष्ठान्पिण्डांनिकेब्रूयाद्वाचयिष्येस्वधामपि ॥ वाच्यतामितिविप्रोक्तःप्र
वदेद्गोत्रपूर्वकम् ॥ ७३ ॥ स्वधोच्यतामितिब्रूयादस्तुस्वधेतितद्वचः ॥ ऊर्जंवहंतीरुच्चार्यजलंपिंडेषुसेचयेत् ॥ ७४ ॥ याःकाश्चिद्देवताः
श्राद्धेविश्वशब्देनकीर्तिताः ॥ प्रीयंतांताइतिब्रूयाद्विप्रेरुक्तेतिवदंजपेत् ॥ ७५ ॥ दातारोनोभिवर्धंतांवेदाः संततिरेवच ॥ श्रद्धाचनोमा
व्यगमद्बहुदेयंचनोस्त्विति ॥७६॥ न्युब्जापिंडार्घपात्राणिकृत्वोत्तानानिसंस्रवान् ॥ क्षिप्त्वापिण्डेष्वतोविप्रान्पितृपूर्वंविसर्जयेत् ॥७७॥ वाजे
वाजेइतिप्रोच्यआमावाजस्यतान्बहिः ॥ ब्रूयात्प्रदक्षिणीकृत्यक्षमध्वमिदमित्यपि ॥७८॥ पिंडानांमध्यमंपिण्डंपितॄन्ध्यायन्समाहितः ॥ प्राश
येत्पुत्रकामांतुतांभार्यांश्राद्धकृन्नरः ॥ ७९ ॥ स्नुषांवापिसगोत्रांवाप्राप्नुनेपुत्रकांक्षिणीम् ॥ आधत्तपितरोगर्भंव्याहरेयुर्द्विजोत्तमाः ॥२८०॥
महारोगगृहीतोवातद्रोगोपशमायच ॥ प्रंनुमेपितरोरोगमित्युक्त्वाप्राशयेच्चतम् ॥ ८१ ॥ अन्यानप्सुहुताशेवाक्षिपेत्पिंडान्द्विजायवा ॥

अजायवापितान्दद्यात्पश्चाद्विप्रविसर्जनम् ॥ ८२ ॥ उच्चार्यपैतृकादेकेपाकान्मातामहायच ॥ एकेनैवहिचैकेपिपट्दैवत्यादितिश्रुतिः ॥ ॥ ८३ ॥ निदध्युःपृथगुद्धृत्यपात्रेपिंडार्थमोदनम् ॥ तथापाकमपीच्छंतिभिन्नगोत्रतयाद्विजाः ॥ ८४ ॥ अदैवेक्षय्यस्थानेतुवक्तव्यमुपतिष्ठताम् ॥ अभिरम्यतांस्वधास्थानेविप्रैरभिमताःस्मह ॥ ८५ ॥ ऊर्ध्वंतुप्रोष्ठपद्यास्तुप्रतिपदादिकाश्रयाः ॥ पुण्यास्तांस्तिथयः सर्वादशापिसहपंचभिः ॥ ८६ ॥ तेषांचतुर्दशीपुण्याशस्त्रेणोपहताश्रये ॥ पितृभ्यस्त्रयोदश्यांगयाश्राद्धाधिकंफलम् ॥ ८७ ॥ नतत्रपातयेत्पिंडान्संतानेप्सुःकदाचन ॥ पिंडदानेनतुनयःप्राहुर्वंशक्षयंबुधाः ॥ ८८ ॥ तस्मात्प्रेप्सुस्त्रयोदश्यांनपिंडान्पातयेद्द्विजः ॥ पातयेत्तमभिस्थंयःप्राहसत्यवतीपतिः ॥ ८९ ॥ भवायुक्तत्रयोदश्यांपिंडनिर्वपणाद्द्विजः ॥ तत्सतामोनकुर्वीतप्रोचुःकेपिमुनीश्वराः ॥ ॥ २९० ॥ यःसंक्रमेभानुदिनेनकुर्याद्विपोपर्णपावणकंद्विजन्मा ॥ पिंडप्रधानंपितृभ्यस्तद्व्यस्तोभवेनसुतोनुजोवा ॥ ९१ ॥ पंचमीपुत्रकामास्तुनथैवैकादशीतिथिः ॥ कामप्रदान्यमावास्यापंचम्यूर्ध्वंशुभाःस्मृताः ॥ ९२ ॥ अन्नंक्षीरंघृतंक्षौद्रमक्षय्वंकालशाकवत् ॥ एतेश्वसर्पितोविप्रास्तेपांतृप्तास्तुपूर्वजाः ॥ ९३ ॥ देशःपर्वाणिकालश्चहविःपात्रंप्रतिक्रिया ॥ पितृदैवैकचित्तत्वंयोगाद्यपितृभादिभिः ॥ ९४ ॥ शौचंचपात्रशुद्धिश्चश्रद्धाचपरमायदि ॥ अनंततृप्तिकृच्छ्राद्धेन्नमेतच्चामिषम् ॥ ९५ ॥ यस्तुप्राणिवधंकृत्वामांसेनतर्पयेत्पितॄन् ॥ सोविद्वांश्चन्दनंदग्ध्वाकुर्यादंगारविक्रयम् ॥ ९६ ॥ क्षिप्त्वाकूपेयथाकिंचिद्बालआदातुमिच्छति ॥ पतत्यज्ञानतःसोपितथामांसेनश्राद्धकृत् ॥ ९७ ॥ सर्वथान्नंयदानस्यात्तदेवामिषमाश्रयेत् ॥ ब्राह्मणश्चस्वयंचाद्यात्तच्चश्रादिहतंयदि ॥ ॥ ९८ ॥ अथान्यंतपापमृत्यूनांशुध्यर्थंपापमुच्यते ॥ कृतेनतेनयेषांतुप्रदत्तमुपतिष्ठति ॥ ९९ ॥ शृंगिदंत्युरगव्यालनीरास्युद्बंधनैस्त

था ॥ विद्युन्निर्घातवृक्षैश्चविप्रैश्चैवात्मनाहताः ॥ २०० ॥ व्रणसंजातकीटाश्चम्लेच्छैश्चैवहतानराः ॥ पापमृत्यवएतेवैशुभगत्यर्थंतूच्यते ॥
॥ १ ॥ नारायणोबलिःकार्योविधानंतस्यकथ्यते ॥ ऊर्ध्वंपण्मासतःकुर्यादेकेऊर्ध्वमुक्तसरात् ॥ २ ॥ तेषांपापव्यपोहार्थंकार्योनारा
यणोबलिः ॥ धौतवासाःशुचिःस्नातएकादश्यामुपोषितः ॥ ३ ॥ शुक्लपक्षेतुसंपूज्यविष्णुमीशंयमंतथा ॥ नदीतीरंशुचिर्गत्वाप्रदद्याद
शपिंडकान् ॥ ४ ॥ क्षौद्राज्यतिलसंयुक्तान्दविपादक्षिणामुखः ॥ अभ्यर्च्यपुष्पधूपाद्यैस्तन्नामगोत्रपूर्वकान् ॥ ५ ॥ विष्णुध्यान
मनाःकुर्यात्ततस्तानंभसिक्षिपेत् ॥ निमंत्रयेतविप्रांश्चपंचसनाथवानव ॥ ६ ॥ द्वादश्यांकृतपस्नानान्धौतवस्त्रान्समागतान् ॥
कृष्णाराधनकृद्भक्त्यापादप्रक्षालितांश्छुभान् ॥ ७ ॥ दक्षिणाप्रवणेदेशेशुचींस्तानुपवेशयेत् ॥ द्वौदैवेतुत्रयःपित्र्येप्राङ्मुखो
दङ्मुखान्द्विजान् ॥ ८ ॥ आसनावाहनाद्यंचकुर्यात्पार्वणवद्विजः ॥ भोजयेद्भक्ष्यभोज्यैश्चक्षौद्रैश्चवाज्यपायसैः ॥ ९ ॥ तृप्तांस्ताने
थविप्रेशांस्तृप्तिंपृच्छेद्यथाविधि ॥ साज्येनतिलमिश्रेणहविष्येणचतान्पुनः ॥ २१० ॥ पंचपिंडान्प्रदद्याद्वैतत्तद्रूपमनुस्मरन् ॥ विष्णु
ब्रह्मशिवेभ्यश्चत्रीन्पिंडांश्चयथाक्रमम् ॥ ११ ॥ यमायमानुगायाथचतुर्थंपिंडमुत्सृजेत् ॥ मृतंसंचिंत्यमनसागोत्रनामकपूर्वकम् ॥ १२ ॥
विष्णुंस्मृत्वाक्षिपेत्पिण्डान्पंचपंचततःपुनः ॥ दक्षिणाभिमुखोभूत्वानिर्वपेत्पंचपिण्डकान् ॥ आचम्यब्राह्मणान्पश्चात्प्रोक्षणादिक्रमाच्चरेत्
॥ १३ ॥ हिरण्येनचवासोभिर्गोभिर्भूम्याचतान्द्विजान् ॥ प्रणम्यशिरसापश्चाद्विनयेनप्रसादयेत् ॥ १४ ॥ तिलोदकंकरेकृत्वाप्रेतंसं
स्मृत्यचेतसा ॥ गोत्रपूर्वंक्षिपेत्पाणौबुद्धौविष्णुंनिवेश्यच ॥ १५ ॥ बहिर्गत्वातिलांभस्तुतस्मैदद्यात्समाहितः ॥ मित्रभृत्यनिजैःसार्धंपश्चा
द्भुंजीतवाग्यतः ॥ १६ ॥ एवंविष्णुमतेस्थित्वायोदद्यात्पापमृत्यवे ॥ समुद्धरतितंप्रेतंपराशरवचोयथा ॥ १७ ॥ सर्वेषांपापमृत्यूनांकार्यो

शू. पा. नारायणोबलिः ॥ तस्मादूर्ध्वंचतेभ्योवैप्रदत्तमुपतिष्ठति ॥ १८ ॥ एवंश्राद्धैः समस्तान्यःसंतर्पयतिवैपितॄन् ॥ ददत्यनुत्तमांस्तस्यपित अ० ८
॥४०॥ रस्तर्पिताःसुतान् ॥१९॥ विख्यातपौरुषान्पुत्रान्पूज्यत्वमथयोपितः ॥ सौभाग्यंशौर्यमोजश्चबलंश्रैष्ठ्यमरोगिताम् ॥२०॥यशःकुप्यमंशो
कत्वंसिद्धिंचैवात्मवांछिताम् ॥ पशश्चदीर्घमायुश्चतथैवाद्युत्तमांगतिम् ॥ २१ ॥ अथान्यत्किंचिदाख्यामिपितॄणांमुक्तिदायकम् ॥ कृते
नस्वल्पकेनापिप्राप्नुवंतिविधेःफलम् ॥२२॥उत्सृष्टस्यविसर्गार्थंविधिस्तात्कालिकोहियः॥श्राद्धज्ञैर्विहितोयःप्राक्पितृगणहितैषिभिः ॥२३॥
आदायसर्वमुच्छिष्टमवनेजनवद्बुधाः ॥ तत्रैवनिक्षिपेद्भूमौतिलदर्भसमन्वितम् ॥ २४ ॥ नरकेषुगतायेवैअपमृत्युमृतामम ॥ एतदाप्यायनं
तेषांचिरात्सास्त्वब्रवीन्मुनिः ॥ २५ ॥ करस्यमध्यतोदेवाःकरपृष्ठेतुराक्षसाः ॥ पात्रालंबनात्पश्चात्तस्मात्तन्नदर्शयेत् ॥ २६ ॥ दर्भा
श्चस्वयमानेयादक्षिणाप्रवणोद्भवाः ॥ तर्पणाद्युज्झितायेवैइत्याद्यांश्चविवर्जयेत् ॥ २७ ॥ नकुशंकुशमित्याहुर्दर्भमूलंकुशःस्मृतः ॥ छिन्नाद्
र्भाइतिप्रोक्तस्तदग्रंकुतपःस्मृतः ॥ २८ ॥ हरितायज्ञियादर्भाःपीतकाःपाकयाज्ञिकाः ॥ सकुशाःपितृदैवत्याश्छिनावैश्वदेविकाः ॥ २९ ॥
दर्भमूलेस्थितोब्रह्मादर्भमध्येजनार्दनः ॥ दर्भाग्रेशंकरस्तस्थौदर्भादेवत्रयान्विताः ॥३०॥ अहन्येकादशेश्राद्धेप्रतिमासंतुवत्सरम् ॥प्रतिसं
वत्सरंकार्यमेकोदिष्टंतुसर्वदा ॥ ३१ ॥ एकस्यप्रथमंश्राद्धमर्वागब्दाचमासिकम् ॥ प्रतिसंवत्सरंचैवज्ञेयंत्रिपुरुषंस्मृतम् ॥ ३२ ॥ सपिंडी
करणादूर्ध्वंप्रतिसंवत्सरंसुतैः ॥ मातापित्रोःपृथक्कार्यमेकोदिष्टंमृताहनि ॥ ३३ ॥ चतुर्दश्यांतुयच्छ्राद्धंसपिंडीकरणेकृते ॥ एकोद्दिष्टवि
धानेनतत्कुर्याच्छस्त्रघातिने॥३४॥पित्रादयस्तुयेयस्यशस्त्रघातात्त्वनुक्रमात् ॥ सभूतेपार्वणंकुर्यादाब्दिकंनपृथक्पृथक् ॥३५॥ सपि ॥४०॥
डीकरणादूर्ध्वंपितुर्यःप्रपितामहः ॥ सतुलेपभुक्त्वेवप्रलुप्तःप्रतिपिंडतः ॥ ३६ ॥ सपिंडीकरणादूर्ध्वंकुर्यात्पार्वणवत्सदा ॥ प्रतिसंवत्सरंवि

द्राग्छागलेयोदितोविधिः ॥ ३७ ॥ सपिंडतातुकर्तव्यापितुः पुत्रैःपृथक्पृथक् ॥ स्वाधिकारप्रवृत्तत्वादितरःश्राद्धकर्तृवत् ॥ ३८ ॥ यस्य संवत्सरादर्वाक्सपिंडीकरणंभवेत् ॥ प्रतिमासंतस्यकुर्यात्प्रतिसंवत्सरंतथा ॥ ३९ ॥ अर्वाक्संवत्सराद्वृद्धौपूर्णेसंवत्सरेपिवा ॥ येस पिंडीकृताःप्रेतानंतुतेषांपृथक्क्रिया ॥ ३४० ॥ एकापिंडीकृतानांतुपृथक्त्वंनोपपद्यते ॥ सपिंडीकरणादूर्ध्वंमृतेकृष्णचतुर्दशीम् ॥ ४१ ॥ येसपिंडीकृतास्तेषांपृथक्त्वंनोपपद्यते॥पृथक्त्वकरणेतस्यपुनःकार्यासपिंडना ॥४२॥ संस्थास्त्रियंपतिर्मात्रातयासहसपिंडयेत्॥तत्सद्भावे पितामह्यातन्मात्राचापरेविदुः॥४३॥नान्यथातुपितामह्यामातामह्यातथापरे ॥ उदकंपिंडदानंचसहभर्त्राप्रदीयते ॥४४॥ अपुत्रायेमृताःके चित्स्त्रियोवापुरुषाअपि ॥ तेषामपिप्रदेयंस्यादेकोदिष्टंनपार्वणम् ॥ ४५ ॥ अपुत्राश्चमृतायेचकुमाराःसंस्मृताअपि ॥ तेषांसमानतानस्यान्न स्वधानाभिरम्यताम् ॥ ४६ ॥ भर्त्रासपिंडतास्त्रीणांकार्येतिमुनयोविदुः ॥ श्वश्र्वासहापरेतस्यास्तन्मात्रावापरेविदुः ॥ ४७ ॥ अनपत्येषुप्रेते पुनस्वधानाभिरम्यताम् ॥ एकोदिष्टेषुसर्वेषुनस्वधानाभिरम्यताम् ॥४८॥ मित्रबंधुसपिंडेभ्यःस्त्रीकुमारस्यचैवहि ॥ दद्याद्वैमासिकंश्राद्धंसं वत्सरंतुनान्यथा ॥ ४९ ॥ अप्रत्ययगताश्चैवदेशकालव्यवस्थया ॥ योययाक्रियायुक्तःसतयैवबहिर्निर्वपेत् ॥ ३५० ॥ वात्यार्थदृश्यतेरूढिमा नवलिंगमेवच ॥ दृढीकृताचविद्वद्भिर्लोकरूढिर्गरीयसी ॥ ५१ ॥ विकल्पेषुचसर्वेषुस्वयमेवंवमादितः ॥ अंगीकरोतियंकृत्वासर्वविधिस्तस्यने तरः ॥ ५२ ॥ प्रत्यहंयाचतेयस्तुवर्णान्ब्राह्मांस्तुनित्यशः ॥ म्लेच्छांश्चशौंडिकांचैवसविप्रोयाचकउच्यते ॥ ५३ ॥ यस्तुधर्मेणदुष्टात्मासुवर्ण गोपहारकः ॥ संगृहीतसवर्णस्त्रीसविप्रोगणउच्यते ॥ ५४ ॥ मृतेभर्तरियानारीरहस्यंकुरुतेपतिम् ॥ तस्यवैश्रावयेद्गर्भंसानारीगणिका स्मृता ॥ ५५ ॥ अन्यंदत्त्वातुयाकन्यापुनरन्यत्रदीयते ॥ अपितस्यानभोक्तव्यंपुनर्भूःसाप्रकीर्तिता ॥ ५६ ॥ कौमारंपतिमुत्सृज्ययाप

रंपुरुषंश्रिता ॥ पुनःपत्युर्गृहंगच्छेत्पुनर्भूःसाप्रकीर्तिता ॥ ५७ ॥ असत्सुदेवरेषुस्त्रीबांधवैर्याप्रदीयते ॥ सवर्णायसपिंडायसापुनर्भूस्तृ
तीयका ॥ ५८ ॥ संप्राप्तेद्वादशेवर्षेयागर्भेनबिभर्तिहि ॥ धारितंतुतयारेतोरेतोधाःसाप्रकीर्तिता ॥ ५९ ॥ याभर्तुर्व्यभिचारेणकामंचर
तिनित्यशः ॥ तस्याअपिनभोक्तव्यंसाभवेत्कामचारिणी ॥ ३६० ॥ पतिंहित्वातुयानारीगृहादन्यत्रगच्छति ॥ अन्येषुरमतेनित्यंस्वैरिणी
साप्रकीर्तिता ॥ ६१ ॥ पतिंविहाययानारीसवर्णमन्यमाश्रयेत् ॥ वर्ततेब्राह्मणत्वेनाद्वितीयास्वैरिणीमता ॥ ६२ ॥ मृतेभर्तरियायाति
क्षुत्पिपासातुरातुया ॥ तवाहमितिसंभाष्यतृतीयास्वैरिणीचसा ॥ ६३ ॥ देशकालाद्यपेक्ष्यैवगुरुभिर्याप्रदीयते ॥ उत्पन्नसहसान्यस्मैच
तुर्थीस्वैरिणीचसा ॥ ६४ ॥ आसांपुत्राश्चयेजातास्तेवर्ज्याहव्यकव्ययोः ॥ तथैवपतयस्तासांवर्जनीयाःप्रयत्नतः ॥ ६५ ॥ श्राद्धंतैश्चन
कर्तव्यंप्रतिलोमविधानतः ॥ वर्णाश्रमबहिःस्थास्तेसंकीर्णजन्मसंभवाः ॥ ६६ ॥ मातॄणांचपितॄणांचत्रयाणांनैवपिंडदाः ॥ उपपन्नःसुतो
यस्तुयश्चैवदिधिषूपतिः ॥ ६७ ॥ परपूर्वपतेर्जातःसर्ववर्ज्याःप्रयत्नतः ॥ अजापालादिजातांश्चविशेषेणतुवर्जयेत् ॥ ६८ ॥ मृतानुगमनं
नास्तिब्राह्मण्याब्रह्मशासनात् ॥ इतरेषुचसर्वेषुतपःपरममुच्यते ॥ ६९ ॥ भर्तुश्चित्यांसमारोहेद्याचनारीपतिव्रता ॥ अहन्येकादशेप्राप्ते
पृथक्पिंडेनियोजयेत् ॥ ३७० ॥ श्रौतैश्चस्मार्तमंत्रैश्चदंपतीचैकतांगतौ ॥ एकमृत्युमृतौतौचेद्दह्वेकत्रयोहुतौ ॥ ७१ ॥ एकत्वंचत
योर्यस्माज्जातमाद्यावसानकम् ॥ एकादशादिकंश्राद्धमेकमेवस्मृतंबुधैः ॥ ७२ ॥ आरुह्यभर्तुश्चितिमंगनायाप्राप्नोतिमृत्युंबहुसत्वयुक्ता ॥
एकादशाहेपितयोर्विधेयंश्राद्धंपृथक्सर्गमपेक्ष्यसद्भिः ॥ ७३ ॥ एकत्वमिच्छंतिमतिप्रहीणाएकादशाहादिषुयेनृनार्योः ॥ तेस्वर्गमार्गेविनि
हत्यकुर्युःस्त्रीसत्वघातान्नरकेधिवासम् ॥७४॥ समानमृत्युर्नायस्तुमृतोभर्तातुयोषिता॥तस्याःसपिंडतानेनपिंडमेकंतुनिर्वपेत्॥७५॥स्त्रीपा

श्राद्धंत्रिपुरुषेत्रीणितत्प्रत्यक्षपितॄन्प्रति ॥७६॥ पत्यासहपराभूतातेनैवास्याःसपिंडता ॥ पितामह्यापिचा
त्रां
न्यत्रवाक्यमाहपराशरः ॥ ७७ ॥ अन्यप्रीतौनचान्यस्यतृप्तिःकुत्रापिदृश्यते ॥ एवंधीमानपुत्रापितस्मान्नैकत्वमाश्रयेत् ॥ .७८ ॥
एकत्वाश्रयणेधर्मोनार्यालुप्तोभवेद्ध्रुवम् ॥ तस्याःसुकृतसामर्थ्यात्पत्युःस्वर्गमिहेष्यते ॥ .७९. ॥ भर्त्रासहमृतायातुनाकलोकसमीह
याः ॥ साद्यश्राद्धेपृथक्पिंडानैकत्वंतुबुधैःस्मृतम् ॥ ३८० ॥ पतिमृत्युःस्त्रियामृत्युनिमित्तमेवजायते ॥ निर्निमित्तोनवैमृत्युर्मृ
त्युनांनैकताभवेत् ॥ ८१ ॥ भर्त्रासहमृतानारीभर्तारंयासमुद्धरेत् ॥ तस्याःपतिव्रताधर्मःपिंडैक्येनहतोभवेत् ॥ ८२ ॥ बलीय
स्त्वेनधर्मस्यतुच्छत्वादागमस्यच ॥ धर्मेणलुप्यतेपापमेकत्वेसमतातयोः ॥ ८३ ॥ नैकत्वंचतयोस्तस्माद्वक्तव्यंश्राद्धकर्मणि ॥ पृ
थगेवहिकर्तव्यंश्राद्धमेकादशाहिकम् ॥ ८४ ॥ श्राद्धानियानिकार्याणितान्युक्तानिपृथक्पृथक् ॥ कर्तव्यंयैस्तुविप्युक्ताविशेषंतुनिबो
धत ॥ ८५ ॥ औरस्याद्याःस्मृताःपुत्रामुनिभिर्द्वादशैवतु ॥ यथाजात्यनुसारेणवर्णानामनुसारतः ॥ ८६ ॥ श्राद्धप्रदाःक्रमेणस्युः
पूर्वाभावेपरःपरः ॥ यस्माद्योजायतेपुत्रःसभवेत्तस्यपिंडदः ॥ ८७ ॥ तस्मात्तस्माद्दर्पाहतेमृताःप्रेतत्वमागताः ॥ तस्मादवश्यमेवं
हिश्राद्धंकार्यंविजानता ॥ ८८ ॥ शूद्रस्यदासिजःपुत्रःकामतस्तुसपिंडदः ॥ जात्याजातायतोमातुःपिंडदःस्यात्सुतोपिच ॥ ८९ ॥
जनकस्यनकिंचित्स्याद्दर्थाद्धर्मप्रवर्तनात् ॥ वायुभूताश्चपितरोदत्ताभिकांक्षिणःसदा ॥ तस्मात्तेभ्यःसदादेयंस्मृतिधर्मरतैर्जनैः ॥ ३९० ॥
येखङ्गमांसमधुपायससर्पिरन्नंदेशेचकालसहितैश्चसुपात्रदत्तैः ॥ प्रीणंतिदेवमनुजान्पितृवंशजातास्तेपांनृणांचापितरोवरदाभवंति ॥ ९१ ॥
एवंदास्यतियःश्राद्धंसर्वकामान्सलप्स्यते ॥ ३९२ ॥ इतिबृह० धर्मशास्त्रेसुव्रतप्रोक्तसं
मयाश्राद्धविधिःप्रोक्तोवर्णानांपितृतृप्तिकृत् ॥

हितायांश्राद्धाधिकारेपंचमोऽध्यायः ॥ ५ ॥ अथातःसंप्रवक्ष्यामिशुद्धिंपाराशरेमेदिताम् ॥ सूतकेप्यथवाशौचेयथावत्तांनिबोधत ॥
॥ १ ॥ प्रासवंसूतकंप्राहुःशावमाशौचमुच्यते ॥ यावत्कालंचयन्मानंतथावाकन्निबोधत ॥ २ ॥ केषांचित्तेनवैस्यातांकेषांचिन्मरणां
तिके ॥ अपःशौचास्तथाचान्येस्मृताश्चैकाहिकाःपरे ॥ ३ ॥ त्रिषट्दशदशद्वाभ्यांदशभिःसहपंचभिः ॥ तान्येवत्रिगुणान्याहुर्वेदंत्येवंमनी
षिणः ॥ ४ ॥ वक्ष्यमाणंनिबोधध्वमुक्तक्रममिदंबुधाः ॥ शक्तिजोयन्मुनींद्राणांप्रागूचेकिलधर्मवित् ॥ ५ ॥ विष्णुध्यानरतानांचसद्देवव्रत
चारिणाम् ॥ गृहमेधिद्विजातीनांतथैवव्रतचारिणाम् ॥ ६ ॥ वेदतत्त्वार्थवेत्तॄणांनित्यस्नानकृतामपि ॥ अनुसंसर्गेणामेषांनाशौचंनापिसू
तकम् ॥ ७ ॥ संसर्गंवर्जयेद्यस्मात्संसर्गोदोषकारणम् ॥ कुर्यान्नान्नादिसंसर्गंवर्जयन्स्यादकिल्बिषी ॥ ८ ॥ वदंतिमुनयःप्राच्याःसंसर्गोदो
षकारणम् ॥ असंसर्गःस्वकर्मस्थोद्विजोदोषैर्नलिप्यते ॥ ९ ॥ दानोद्वाहेष्टिसंग्रामेदेशविप्लवकादिषु ॥ सद्यःशौचंद्विजातीनांसूतकाशौ
चयोरपि ॥ १० ॥ दातॄणांव्रतिनामेकैकवयःसत्रिणामपि ॥ सद्यःशौचमदोषाणामूचुर्धर्मविदःकलौ ॥ ११ ॥ सर्वमंत्रपवित्रःस्याद
ग्निहोत्रीषडंगवित् ॥ राजाचश्रोत्रियश्चैवसद्यःशौचाःप्रकीर्तिताः ॥ १२ ॥ देशांतरगतेजातमृतेवापिसगोत्रिणि ॥ सत्यप्येकनिवासेतु
सद्यःशौचंविशोधनम् ॥ १३ ॥ सद्यःशौचंविधातव्यमर्वाक्दशनजन्मनः ॥ बांधवादिषुविज्ञेयमन्यदूर्ध्वंविधीयते ॥ १४ ॥ नाशौ
चंसूतकेस्यातांनृपतीनांकदाचन ॥ यज्ञकर्मप्रवृत्तस्यऋत्विजोदीक्षितस्यच ॥ १५ ॥ पृथक्पिंडेमृतेबालेनिर्देशेन्यत्रचश्रुते ॥ जातेनापि
विशुद्धिःस्यात्सद्यःशौचादसंशयम् ॥ १६ ॥ सवेदःसाग्निरेकाहाद्ब्राह्मणःशुद्धिमाप्नुयात् ॥ तथैकाहान्नृपेसंस्थेतथैवब्रह्मचारिणि ॥ १७ ॥ 
दुर्भिक्षेराष्ट्रभंगेचविपत्कालउपस्थिते ॥ उपसर्गमृतेचापिसद्यःशौचंविधीयते ॥ १८ ॥ गोद्विजार्थेविपन्नानामाहवेषुगतायुषाम् ॥ तेयो

गिभिःसमाज्ञेयाःसद्यःशौचाःप्रकीर्तिताः ॥ १९ ॥ विप्रेसंस्थेव्रतादर्वाक्श्रोत्रियेचद्विजेमृते ॥ अनूचानेगुरौचैवआचार्येचापिसंस्थिते ॥ २० ॥ स्त्रीणामसंस्कृतानांचश्रोत्रियेचनृपेमृते ॥ त्रिरात्रमेवाशौचंस्यात्तथैवोदकदायिनाम् ॥ २१ ॥ विद्वाननग्निकोविप्रस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ मनीषिणोऽपरेब्रूयुरसपिंडेत्र्यहंत्र्यहम् ॥ २२ ॥ प्रेतीभूतंचयःशूद्रंब्राह्मणोज्ञाननुदुर्बलः ॥ अनुगच्छेन्नीयमानंत्रिरात्रमशुचिर्भवेत् ॥ २३ ॥ पञ्चरात्रंनवरात्रंचशवस्पर्शेविशुद्धिकृत् ॥ अहंचैवविशुद्ध्यर्थंधर्मशास्त्रविदोविदुः ॥ २४ ॥ अनाथंब्राह्मणंप्रेतंयेवहंतिद्विजसत्तमाः ॥ पदेपदेयज्ञफलमनुपूर्वलभंतिते ॥ २५ ॥ अशुचित्वंनतेषांतुपापंवाशुभकारिणाम् ॥ जलावगाहनात्तेषांसद्यःशुद्धिःप्रकीर्तिता ॥ २६ ॥ असगोत्रमसंबंधंप्रेतभूतंतथाद्विजम् ॥ ऊढ्वादग्ध्वाद्विजाःसर्वेस्नानात्तशुचयःस्मृताः ॥ २७ ॥ एकाहात्रंवदंत्येकेसद्यःस्नानमथापरे ॥ गोगृहादिमृतानांचमुनयःशुद्धिकारणम् ॥ २८ ॥ हतःशृंगेविपद्येतशस्त्राभिर्यत्रकुत्रचित् ॥ समुत्क्रोयंतिवत्सद्यःप्रविशन्परवेधसि ॥ २९ ॥ संन्यासीसंस्थितोयोगीसम्मुखेयोरणेहतः ॥ सूर्यमंडलभेत्तारावितिप्राहुर्मनीषिणः ॥ ३० ॥ पराङ्मुखेहतेसैन्येयोयुद्धायनिवर्तते ॥ तत्पदानीष्टितुल्यानिस्युरित्याहपराशरः ॥ ३१ ॥ वदनेप्रविशेद्येषांलोहितंशिरसःपतत् ॥ सोमपानेनतेतुल्याविंदवोरुधिरस्यवै ॥ ३२ ॥ संन्यासेनमृतायेस्युर्येसंग्रामेतनुत्यजः ॥ मुक्तिभाजोनरास्तेस्युरितिवेदोपिकीर्तयेत् ॥ ३३ ॥ सद्यः शौचंविधातव्यंशुद्धिरेवंविधीयते ॥ तेताच्यंतेमृतालोकात्सद्योब्रह्मवपुर्गताः ॥ ३४ ॥ संध्याचारविहीनानांसूतकंब्राह्मणब्रुवाम् ॥ अशौचंद्वादशाहंस्यादितिपाराशरोब्रवीत् ॥ ३५ ॥ राज्ञांचद्वादशाहंतुपक्षोवैश्यस्यपावनः ॥ वृषलस्यतथामासस्त्र्यहान्येष्वपिपर्यंतः ॥ ३६ ॥ क्षपाचपक्षिणीसद्भिर्मातृलादिषुकीर्तिता ॥ गर्भस्रावेचपातेचरात्रयोमाससम्मिताः ॥ ३७ ॥ स्रावंगर्भस्यविद्वांसोमासादर्वाक्चतुर्थकी

त् ॥ पातमूर्ध्वंवदंत्येतेतंत्राधिक्यंचसूतकम् ॥ ३८ ॥ ऋणव्यसनिरोगार्त्तपराधीनकदर्यकाः ॥ तृष्णांवंतोनिराचाराःपितृमातृविवर्जि
ताः ॥ ३९ ॥ स्त्रीजिताश्चानपत्याश्चदेवब्राह्मणवर्जिताः ॥ परद्रव्यग्रहस्वांताःसदासूतकिनःस्मृताः ॥ ४० ॥ सूतकेसत्यशौचेवाअ
न्यदापद्यतेयदि ॥ पूर्वेणवतुशुध्येतजातेजातंमृतेमृतम् ॥ ४१ ॥ एकपिंडाश्चदायादाःपृथक्कृतनिकेतनाः ॥ जन्मन्यथमृतेवापितेषां
वैसूतकंभवेत् ॥४२॥ भृगुवह्निप्रपातेचदेशांतरमृतेषुच ॥ बालेप्रेतेचसंन्यासेसद्यःशौचंविधीयते ॥ ४३ ॥ अजातदंतायेबालायेचगर्भाद्वि
निर्गताः ॥ नतेषामग्निसंस्कारोनाशौचंनोदकक्रिया ॥ ४४ ॥ विवाहोत्सवयज्ञेषुअंतरामृतसूतके ॥ पूर्वसंकल्पितानर्थान्भोज्यांस्ता
नब्रवीन्मनुः ॥ ४५ ॥ शिल्पिनःकारुकाश्चैवदासीदासास्तथैवच ॥ इत्यादीनांनतेस्यांतामनुगृह्णंतियान्द्विजाः ॥ ४६ ॥ पितापु
त्रेणजातेनदद्याच्छ्राद्धंयथाविधि ॥ तत्राप्यनंतकंदानंकर्तव्यंपुत्रजन्मनि ॥ ४७ ॥ प्रसवेचाद्विजातीनांन्कुर्यात्संकरंयदि ॥ दशाहाच्छु
ध्यतेमाताअवगाह्यपिताशुचिः ॥ ४८ ॥ अतिमानादतिक्रोधात्स्नेहाद्वायदिवाभयात् ॥ उद्वध्यम्रियतेयस्तुनतस्याग्निःप्रदीयते ॥ ४९ ॥
नस्नायान्नोदकंदद्यान्नापिकुर्यादशौचताम् ॥ सर्पेणशृंगिणावापिजलेनवह्निनातथा ॥ ५० ॥ नस्नानादौविपन्नस्यतथाचैवात्मघातिनः ॥
अर्वाग्वैहायनादग्निंनैवदद्यान्मृतस्यच ॥ ५१ ॥ किंतुतान्निखनेद्भूमौकुर्यान्नैवोदकक्रियाः ॥ सर्पादिप्राप्तमृत्यूनांवह्निदाहादिकाः क्रि
याः ॥ षण्मासेतुगतेकार्यामुनिःप्राहपराशरः ॥ ५२ ॥ शास्त्रदृष्टंद्विजैःकार्यमस्थिसंचयनादिकम् ॥ तत्कृत्वान्यत्कदिवसेशुद्धिमर्हति
धर्मतः ॥ ५३ ॥ अन्यायमृतविप्राणांयेवोढारोभवंतिहि ॥ अग्निदाश्चवयेतेषांतथोदकादिदायिनः ॥ ५४ ॥ उद्वंधनेमृतस्यापियश्छि
द्यात्पाशरज्जुकम् ॥ सर्वेतेपापसंयुक्ताःप्रायश्चित्तस्यभाजनाः ॥ ५५ ॥ यःसूतकाशौचविशुद्धिकृत्स्यादाख्यायकालंतमनुक्रमेण ॥

पराशरास्यांबुजानिःसृताया वाच्यास्ततोनिष्कृतयोद्विजैस्ताः ॥ ५६ ॥ मृतकाशौचयोरुक्ताशुद्धिर्यथानुपूर्वशः ॥ सर्वपापविशुद्ध्य
र्थंप्रायश्चित्तमथोच्यते ॥ ५७ ॥ मनुर्यायाज्ञवल्क्यस्तुवसिष्ठःप्राहनिष्कृतिम् ॥ साकृतादिषुवर्णानांसातिधर्मेचतुष्पदे ॥ ५८ ॥ मान
सावाचिकादोषास्तथायेकायकारिताः ॥ धर्माधीनानृणांसर्वेजायंतेतेप्यनिच्छताम् ॥ ५९ ॥ तेषामुपस्ताक्षाणांप्रत्यहंशुभमिच्छताम् ॥
शक्तिजोनिष्कृतिंप्राहयुगधर्मानुसारतः ॥ ६० ॥ विकृतव्यवहाराणांपापोनिष्कृतिकृद्द्विजः ॥ कातिविप्रैःकथंरूपैरितिवाच्याभवेद्विसा ॥
॥ ६१ ॥ तद्रूपंचप्रवक्ष्यामिसायावद्भिर्द्विजैर्भवेत् ॥ यथाविधाश्चविप्राःस्युर्गितिविद्वन्प्रकीर्त्यते ॥ ६२ ॥ पर्षद्दशावराप्रोक्ताब्राह्मणैर्वेद
पारगैः ॥ सायद्ब्रूयात्सधर्मस्यात्स्वयंभूरित्यकल्पयत् ॥ ६३ ॥ वेदशास्त्रविदोविप्रायंब्रूयुःसप्तपंचवा ॥ त्रयोवापिसधर्मःस्यादेकोवाध्या
त्मवित्तमः ॥ ६४ ॥ संयमंनियमंवापिउपवासादिकंचयत् ॥ तद्गिरापरिपूर्णंस्यान्निष्कृतेव्यावहारिकी ॥ ६५ ॥ नलक्षेणापिमूर्खाणां
नचैवाधर्मवेदिनाम् ॥ विदुषांनापिलुब्धानांनचापिपक्षपातिनाम् ॥ ६६ ॥ श्रुताध्ययनसंपन्नःसत्यवादीजितेंद्रियः ॥ सदाधर्मरतःशांतएकः
पर्षत्त्वमर्हति ॥ ६७ ॥ नसावृद्धैर्नतरुणैर्नसुरूपैर्धनान्वितैः ॥ त्रिभिरेकेनपर्षत्स्याद्विद्वद्भिर्विदुषापिवा ॥ ६८ ॥ वयसाल्पवयोपिस्युर्वृ
द्धाधर्मविदोद्विजाः ॥ शिशवोपिहिमध्यस्थाःसर्वत्रसमदर्शनाः ॥ ६९ ॥ नसावृद्धैर्भवेद्विप्रवृद्धाःस्युर्ब्रह्मवादिनः ॥ यत्रसत्यंसधर्मःस्याद्य
च्छलंतन्नगृह्यते ॥ ७० ॥ नसासभायत्रनसंतिवृद्धावृद्धान्नतेयेनवदंतिधर्मं ॥ नासौधर्मोयत्रनोसत्यमस्तिनोतत्सत्यंयच्छलेनानुविद्धम् ॥
॥ ७१ ॥ निष्कृतेव्यवहारेचवक्तस्याशंसनेनतथा ॥ धर्मंवायदिवाधर्मंपरिषत्प्राहतद्भवेत् ॥ ७२ ॥ प्रविश्यपर्षदंतेवैसभ्यानामग्रतः
स्थिताः ॥ यथाकालंप्रकुर्युस्तेप्रायश्चित्तंतदीरितम् ॥ ७३ ॥ किंत्वयंयाचतेदेषावदंतेत्राद्विजातयः ॥ सर्षैकुर्वातिनिर्वृतंगतपापंनसंशयः ॥

॥ ७४ ॥ प्रसादोद्विविधोज्ञेयोदेवश्चासुरएवच ॥ क्रीडयापिचतत्रैवदेवास्त्वथैवतेद्विजाः ॥ ७५ ॥ व्यवहारेगोसमैस्तुप्रब्रूयाद्वापितैरतः ॥
यथाकृतंचयत्पापंतथैवाविनिवेदयेत् ॥ ७६ ॥ यस्तेषामन्यथाब्रूयात्सपापीमंत्रसंशयः ॥ सत्यमसत्यमेवात्रविपर्यस्तंचवेदितः ॥ ७७ ॥
सएवानृतवादीस्यादनंतेनरकेव्रजेत् ॥ ज्योतिषंव्यवहारंचप्रायश्चित्तंचिकित्सितम् ॥ ७८ ॥ अजानन्योनरोब्रूतेसाहसंकिमतःपरम् ॥
व्यवहारश्चतैः प्रोक्तोमन्वाद्यैर्धर्मवादिभिः ॥ ७९ ॥ प्रजाभिर्नतुसर्वाभिर्मान्यश्चैवतुमानवैः ॥ तच्छोधकप्रमाणानिलिखि
तादीनितैर्विना ॥ जलादीनिचदिव्यानिसाक्ष्योक्तशपथानिच ॥ ८० ॥ अन्यजनपदाचाराअणुधर्मस्तथापरः ॥ परिषद्ब्राह्मणैर्मध्यानिर्ण
तव्यायथाविधिः ॥ ८१ ॥ नान्यजात्यनुसारेणदेशकालादिधर्मतः ॥ कर्तव्यंसत्तमैःसर्वैर्माननीयाविवादिभिः ॥ ८२ ॥ गोब्राह्मणहतादी
नांतथादंभादिकारिणाम् ॥ नतत्कृच्छ्रैःशुद्धिःस्यादितिपाराशरोब्रवीत् ॥ ८३ ॥ भोजयेद्ब्राह्मणान्यत्नात्सवृषागोश्चदक्षिणा ॥ जायंतेपाप
निर्मुक्ताःशक्तिसूनोर्यथावचः ॥ ८४ ॥ अनाशकान्निवृत्तायेब्रह्मचर्यात्तथाद्विजाः ॥ वैडालिकास्तेविज्ञेयाःसर्वधर्मविवर्जिताः ॥ ८५ ॥ सर्वं
प्रव्राजितायेयेचवैडालिकैःसमाः ॥ तेषांसवर्णाण्यपत्यानिपुल्कसैःसहवानयेत् ॥ ८६ ॥ स्त्रीणांचबालवृद्धानांक्षयिणांकुशरीरिणाम् ॥ उ
पवासाद्यशक्तानांकर्तव्योनुग्रहश्चतैः ॥ ८७ ॥ ज्ञात्वादेशंचकालंचवयःसामर्थ्यमेवच ॥ कर्तव्योनुग्रहःसद्भिर्मुनिभिःपरिकीर्तितः ॥ ८८ ॥
लोभान्मोहाद्भयान्मैत्र्याद्यदिकुर्युरनुग्रहम् ॥ तमृद्धानरकंयांतिशतधाप्राप्तपातकाः ॥ ८९ ॥ ब्रह्मघ्नश्चसुरापश्चस्तेयीगुर्वंगनागमः ॥ एतेषां
निष्कृतिंब्रूयादेतत्संसर्गिणामपि ॥ ९० ॥ द्वादशाब्दानिनिचरेद्ब्रह्मघ्नस्तत्कपालभृत् ॥ सर्वत्रख्यापयन्कर्मभिक्षांविप्रेषुसंचरन् ॥ ९१ ॥
दृष्ट्वासेतुंसमुद्रस्यस्नात्वावैलवणांभसि ॥ ब्राह्मणेषुचरेद्भिक्षांस्वकर्मख्यापयञ्छुचिः ॥ ९२ ॥ मुंडःसन्सशिखावर्जःसकौपीनोनिराश्रयः ॥

॥४४॥

चीरचीवरवासावैत्रिःस्नायीसश्छुचिव्रंती.॥ ९३॥ वीताक्षश्चवेग्च्छांतश्छत्रोपानद्विवर्जितः ॥ ब्रह्मघ्नोस्मीत्यहंवाचामितिसर्वत्रवैवदेत् ॥
॥ ९४ ॥ गवांचविंशतिंदद्याद्दक्षिणांवृषसंयुताम् ॥ ब्राह्मणेभ्योनिवेद्यैनाःशुचिराख्यायभूपतेः ॥ ९५ ॥ परीक्षंप्रत्यवसितेप्रायश्चित्तमिदं
स्मृतमं ॥ ब्राह्मणानांप्रसादेनतीर्थपुगमनेनच ॥ ९६ ॥ अवभृथेश्वमेधस्यस्नात्वाशुद्धिमवाप्नुयात् .॥ आख्यायनृपतेर्वापिनेनसंशोधितः
शुचिः ॥ ९७ ॥ महापापानिसर्वाणिकथयित्वामहीपतेः ॥ निष्कृतिंनद्विगदद्यादन्यथानेपितत्समाः ॥ ९८ ॥ गेगातांगांगुरुंवापिमार्गेवेद
समन्वितौ.॥ दृष्ट्वाकृत्वानिरातंकोब्रह्महाशुद्धिमाप्नुयात ॥ ९९ ॥ असंख्यातंधनंदत्वाविप्रेभ्योवाविशुद्ध्यति ॥ अरण्येनिर्जलेजप्त्वाशुद्ध्ये
त्रिवेदसंहिताम् ॥१००॥ सुरापस्याथवक्ष्यामिनिष्कृतिंश्रोतुमर्हसि ॥ सुरापोत्रसुरांतप्तांपयोवाजलमेववा.॥१॥ ततंगोमूत्रमाज्यंवामृतःपी
त्वाविशुद्ध्यति ॥ जटीवावाल्यवासावाब्रह्महत्याव्रतंचरेत् ॥ २ ॥ यद्यज्ञानात्पिबेन्मद्यंद्विजातिर्वाकदाचन ॥ पुनःसंस्कारकरणाच्छुध्येदा
हपराशरः ॥ ३ ॥ मूर्यंकृत्वासुवर्णस्यशुद्ध्येसर्वेद्विजातयः ॥ समर्प्यमुशलंराज्ञेख्यापयन्स्वेयकर्मतत् ॥ ४ ॥ शक्तिश्चोभयतस्तीक्ष्णामा
यसंदंडमेववा ॥ खादिरंलकुटंवापिहन्यादेकेननंनृपः ॥ ५ ॥ जीवन्नपिभवेच्छुद्धोमुक्तोवानेनपाप्मना ॥ मृतश्चेत्तेनसंशुध्येदितिपाराशरो
ब्रवीत् ॥ ६ ॥ अयःस्त्रीप्रकृतिंकृत्वावह्निवर्णांचनांधमेत ॥ गुर्वंगनागमीतस्यांलोहमय्यांनुशाययेत् ॥ ७ ॥ वृषणौपुनरुत्कृत्यनैऋत्यामु
त्सृजेत्तनुम ॥ समृतःशुद्धिमाप्नोतिस्त्यान्यातस्यतुनिष्कृतिः ॥ ८ ॥ संवत्सरंचरेत्कृच्छ्रंप्राजापत्यमथापिवा ॥ चांद्रायणंचरेद्वापित्रीन्मासा
न्नियतेंद्रियः॥ ९ ॥व्रतपुक्रियमाणस्तुविपत्तिःस्यात्कथंचन.॥ समृतोपिभवेच्छुद्धइतिधर्मोविनिर्णयः ॥११०॥अनिर्दिष्टस्यपापस्यतथोपपा
तकस्यच॥तच्छुद्ध्यैपापसंकुर्याद्द्वंद्वव्रतंसमाहितः ॥११॥ तिष्ठेन्मासंपयोश्नन्वापराकंवाचरेद्व्रतम्॥अनिर्दिष्टस्यपापस्यशुद्धिरेषाप्रकीर्तिता

॥१२॥ब्राह्मणःक्षत्रियंहत्वागवांदद्यात्सहस्रकम् ॥ वृषभैकेनसंयुक्तंपापादस्मात्प्रमुच्यते॥१३॥ वर्षाणित्रीणिवाशुद्धंचैवब्रह्मघ्नस्यव्रतंचरेत् ॥
चांद्रायणानिवात्रीणिकृच्छ्राणित्रीणिवाचरेत् ॥१४॥ वैश्यंहत्वाद्विजश्चैतदब्दमेकंव्रतंचरेत् ॥ शतमेकंगवांदत्वाचरेच्चांद्रायणानिवा ॥१५॥
कृच्छ्राणित्रीणिवाकुर्याद्वचनाद्विदुषामसौ ॥ येहन्युरप्रदुष्टांस्त्रींचातुर्वर्ण्याद्द्विजातयः ॥१६॥ शूद्रहत्याव्रतंतेतुचरंतःशुद्धिमाप्नुयुः॥शूद्रांयेआ
नुलोम्येननिहत्वाव्यभिचारिणीम् ॥ मुनयःशुद्धिमिच्छंतिचंद्रव्रतेनकेचन ॥ १७॥ व्यभिचारात्तुतेहत्वायोषितोब्राह्मणादयः ॥ तिल
धेनुंवस्तमविक्रमाद्दद्युर्विशुद्धये ॥ १८ ॥ साध्वीनांतुनरोहत्वागवांचैवसहस्रकम् ॥ चीर्णेनशुद्धिमाप्नोतिस्त्रीयोषाहत्याव्रतंचरेत् ॥ १९ ॥
अथगोघ्नस्यवक्ष्यामिनिष्कृतिंश्रोतुमर्हथ ॥ यथायथाविपत्तिःस्याद्गवांतथातथोच्यते ॥१२०॥ गोघातीपंचगव्याशीगोष्ठशायीचगोनुगः ॥
मासमेकंव्रतंचीर्त्वागोप्रदानेनशुध्यति ॥ २१ ॥ चौरव्याघ्रादिकेभ्यश्चसर्वप्राणैःसमुद्धरेत् ॥ गर्तप्रपातपंकाब्धतथान्यत्रोपकारतः ॥ २२ ॥
भोजयेब्राह्मणान्पश्चात्पुष्पधूपादिपूर्वकान् ॥ दद्याद्गांवृषभंचैकंततःशुध्येत्सकिल्बिषात् ॥ २३ ॥ मुनयःकेचिदिच्छंतिविचित्रासुविप
त्तिषु ॥ यथासंभवतस्तासुनिष्कृतिश्चपृथक्पृथक् ॥ २४ ॥ शस्त्रवस्त्राश्ममृत्पिंडयष्टिमुष्टिप्रपातनम् ॥ योक्त्रणंतारणंरोधंबंधनंविद्युद
ग्नयः ॥ २५ ॥ गृहकुड्यप्रपातश्चबद्धव्याघ्रादिभक्षणम् ॥ क्षुत्तृड्रोगचिकित्सासुतथातिदोहवाहने ॥ २६ ॥ मृत्युस्थानानिचैतानिगवाम
तिप्रधावनम् ॥ प्रब्रवीत्पृथगेतेषुप्रायश्चित्तंपराशरः ॥ २७ ॥ उपेक्षणेचपंकादौतथोपविषभक्षणे ॥ वक्ष्यमाणक्रमेणैतच्छृणुध्वंद्विजस
त्तमाः ॥ २८ ॥ शस्त्रेणत्रीणिकृच्छ्राणितदर्धंवासमाचरेत् ॥ अश्मनाद्वेचरेत्कृच्छ्रमृत्पिंडेवापिकृच्छ्रकम् ॥ २९ ॥ यष्ट्यातुर्द्वेचरेत्कृच्छ्रे
साक्षान्मुष्ट्यातुतच्चरेत् ॥ योक्त्रणेपादमेकंतुतारणेपादमेवतु ॥ १३० ॥ रोधनेकृच्छ्रपादेद्वेकृच्छ्रमेकंतबंधने ॥ कूपपातेचरेत्कृच्छ्रमर्धं

वाप्यांसमाचरेत् ॥३१॥ गोशकृत्पिंडघातेचप्राजापत्यंचरेद्द्विजः ॥ क्षुत्तृड्रोगचिकित्सासुकृतमुत्प्रेक्षणोचरेत्॥३२॥ पतितांपंकलग्नांगामव
लुप्तांचयोनरः ॥ स्वस्यवान्यस्यवोत्प्रेक्षेसोर्धकृच्छ्रंचरञ्छुचिः ॥ ३३ ॥ एकाचेद्बहुभिर्बद्धाक्ष्वेडिताचेन्म्रियेतगौः ॥ पादंपादंचरेयुस्तेप्राह
पाराशरोमुनिः ॥ ३४ ॥ सुबद्धांयेबलुतांगांपश्यंतोनोपकुर्वते ॥ घातनोत्प्रेक्षणंप्रोक्तंचरेयुस्तेव्रतंनराः ॥ ३५ ॥ यागतौदौविपद्येतक्ष्वे
डितासंप्रपद्यवा ॥ पादंक्ष्वेडितयोरुक्तंतत्कर्ताव्रतमाचरेत् ॥ ३६ ॥ प्रबद्धारज्जुदोषेणगौर्विपद्येतयस्यसः ॥ व्रतपादंचरेच्छुद्ध्यैकिंचिद्द्या
च्चदक्षिणाम् ॥ ३७ ॥ योगामपालयन्दुह्यादत्यर्थंवाहयेद्वृषम् ॥ यदाम्रियेततद्दोषात्तदाकृच्छ्रार्धमाचरेत् ॥ ३८ ॥ घासंयोनक्षुधार्तस्य
तृषार्तस्यनवाजलम् ॥ स्वीकृतस्यनचेद्द्यात्सतत्पादव्रतंचरेत् ॥ ३९ ॥ एकपादेतुलोमानिद्वाभ्यांश्मश्रुनिकृंतयेत् ॥ पादत्रयेशिखा
वर्जंसशिखंतुनिपातने ॥ १४० ॥ सशिखंवपनंकृत्वात्रिसंध्यमवगाहनम् ॥ गवांमध्येवसेद्रात्रौदिवागाःसमनुव्रजेत् ॥ ४१ ॥ तिष्ठंतीभिश्च
तिष्ठेतव्रजंतीभिःसहव्रजेत् ॥ पिबंतीभिःपिबेत्तोयंशयंतीभिश्चसंविशेत् ॥ ४२ ॥ शृंगकर्णादिसंयुक्तंचर्मोत्कृत्यतदावृतः ॥ विप्रोकस्सुच
रेद्भिक्षांस्वकर्मख्यापयन्व्रती ॥ ४३ ॥ गोघ्नस्यदेहिमेभिक्षामितिवाचमुदीरयेत् ॥ मासमेवंव्रतीचीर्त्वागोप्रदानाद्विशुध्यति ॥ ४४ ॥
यात्रबद्धाचिकित्सार्थंविशल्यकरणायच ॥ औषधादिप्रदानायविपत्तौनास्तिपातकम् ॥ ४५ ॥ विद्युत्पाताग्निदाहाभ्यांकुड्यस्यपतना
दिभिः ॥ गोभिर्विपत्तिमापन्नैस्तत्रदोषोनविद्यते ॥ ४६ ॥ पालस्यपश्यतोरण्येगौस्तुव्याघ्रादिभिर्हता ॥ अकुर्वतःप्रतीकारंकृच्छ्रार्धं
तस्यपावनम् ॥ ४७ ॥ शृण्वत्स्वन्येषुपालेषुतथान्यारण्यगामिषु ॥ पालसंघोषयत्युच्चैर्हतातत्रनदोषभाक् ॥ ४८ ॥ गर्भिणीगर्भ
शल्यातुतद्गर्भंतुविशल्यतः ॥ यत्नतोगौर्विपद्येततत्रदोषोनविद्यते ॥ ४९ ॥ गर्भस्यपातनेपादोद्वौपादौमात्रसंभवे ॥ पादोनंव्रतमाच

घृहत्वागर्भमचेतनम ॥ १५० ॥ अंगप्रत्यंगसंपूर्णेन गर्भेचेतनान्विते ॥ द्विगुणंगोव्रतंकुर्यादेपागोघ्नस्यनिष्कृतिः ॥ ५१ ॥ वस्त्राद्युत्रा
सनेनगोश्चगलदामकदोषकं ॥ पादयोर्बंधनेचैवपादानंव्रतमाचरेत ॥ ५२ ॥ वंटाभरणदोषेणगौश्चेद्दंधनमाप्नुयात ॥ चरेदर्धव्रतंचैवभूषणार्थं
कृतंयतः ॥ ५३ ॥ ... तिपन्नाश्रयासुं ... कुर्याद्योनिर्वानिष्कृतिम ॥ सनद्गोगमतुल्यानिनरकाण्याविशेन्ससमाः ॥ ५४ ॥ यःस्नात्वापापसंभीतो
विप्रोगोपननस्परः ॥ तदत्तानिष्कृतिंकुर्याद्दनेनाशुभमश्नुते ॥ ५५ ॥ अन्यत्प्राणिवधस्यापिप्रवक्ष्येसमविशोधनम ॥ गजादिवधशु
द्ध्यर्थयद्व्रतंयाचदक्षिणा ॥ ५६ ॥ हस्तिनंतुरगंहत्वाकरभंखरमेवच ॥ वृषान्पंचाशतंगुणंवृषंदद्याद्यथाक्रमम ॥ ५७ ॥ कृशाद्रोनि
ष्क्रयंदत्वापरगोवधकृन्नरः ॥ तस्मार्थानिष्कृतिंकुर्याद्वधशुद्धिमपेक्षया ॥ ५८ ॥ हंसंश्येनंकपिंगृध्रंजलस्थलशिखंडिनम ॥ भासंचह
त्वाप्युगांवःशुद्ध्येदेषा पृथक्पृथक ॥ ५९ ॥ पिकसारसचक्राह्वमयूरमंगुकुक्कुटान ॥ आडीपारावतंक्रौंचशुकमांसकभोजनात ॥
॥ १६० ॥ सपादगोव्रतंदद्यात्प्रत्येकंशुद्ध्येद्द्विजः ॥ मर्त्याश्विणांवदंत्येनांनिष्कृतिंप्राणिनांवधे ॥ ६१ ॥ क्रौंचंसारसंहंसादिशिखिचक्रा
ह्वकुक्कुटान ॥ शुकटिट्टिभसंवधेनाशास्कहाशुचिः ॥ ६२ ॥ पारावतकपोतघ्नःसारंगतित्तिरीचापहा ॥ त्रिसंध्यांतंजलप्राणांत्रियम्य
स्याच्छुचिर्द्विजः ॥ ६३ ॥ काकंगृध्रंचश्येनंचअन्यंक्रव्यादपक्षिणम ॥ हत्वास्यादुपवासेनशुद्धिरष्टफलाशनः ॥ ६४ ॥ मार्जारंमूषकं
सर्पंहत्वाजगरडुंडुभौ ॥ कृशरभोजनंदद्यात्सयंचदद्याच्छुचिः ॥ ६५ ॥ सपंचशशकंगोधांहत्वाकूर्मंचशल्लकम ॥ वार्ताकंगृंजनंजग्ध्वा
हारात्रोपोषणाच्छुचिः ॥ ६६ ॥ वृकंचजंबुकंहत्वातरक्षुकंतथाद्विजः ॥ त्रिरात्रोपोषणाच्छुध्येत्तिलप्रस्थप्रदानतः ॥ ६७ ॥
द्विजःशाखामृगंहत्वासिंहंचित्रकमेवच ॥ कृत्वासप्तोपवासान्सदद्याद्ब्राह्मणभोजनम ॥ ६८ ॥ वाराहंयदिवासुतंमृगंहत्वातुकामतः ॥

अफालकृष्टभोजीमन्नेकेनैकेनशुध्यति ॥ ६९ ॥ अथातःसंप्रवक्ष्यामिअन्त्यस्पर्शनादिषु ॥ अभक्ष्यभक्षणादौचनिष्कृतिंश्रोतुमर्हथ ॥
॥ १७० ॥ उदक्यांब्राह्मणींस्पृष्ट्वापतितेनान्त्यजेनवा ॥ चांद्रायणेनशुद्ध्यन्त्याद्विजानांभोजनेत्रिभिः ॥ ७१ ॥ कापालिकादिकांनारींगत्वा
गम्यांतथापराम ॥ भुक्त्वाविप्रस्तदन्नंस्याच्छुद्धश्चांद्रव्रतेनतु ॥ ७२ ॥ कामतस्तुद्विजःकुर्यात्कृच्छ्रमेमनंयदि ॥ चैद्रव्रतद्वयंशुद्ध्यै
प्राहपाराशरोमुनिः ॥ ७३ ॥ दुग्धंसलवणंसकृत्सदुग्धान्निशिमामिषान् ॥ दंतच्छिन्नान्सकृद्दंतान्पृथक्पानजलानपि ॥ ७४ ॥ यात्रा
दुच्छिष्टस्पृश्यंतुपानशेषंजलंपिबेत ॥ एकैकशोविशुद्ध्यर्थविप्रश्चांद्रायणंचरेत ॥ ७५ ॥ वामांसिधावतोयस्यपतंतिजलबिंदवः ॥
तदपुण्यंजलंस्थानंरजकस्यशिलांकितम ॥ ७६ ॥ तत्रपीत्वाजलंविप्रःश्वानतृट्परिपीडितः ॥ तदेनसोविशुद्ध्यर्थंकुर्याच्चांद्रायण
व्रतम ॥ ७७ ॥ शैलूषीरजकीचैवनटीचवेणुवादिनीम ॥ गत्वाचांद्रायणंकुर्यात्तथाचर्मोपजीविनीम ॥ ७८ ॥ गमनंपंचव
वैश्यंचशूद्रवाप्यनुलोमजम ॥ क्षत्रियादीन्त्रयंकृत्वाविप्रश्चांद्रायणंचरेत ॥ ७९ ॥ ब्राह्मणान्नमदन्स्यूद्रःशूद्रान्नंब्राह्मणोप्यदन् ॥ द्वाव
प्यनावभाज्यान्नौचरेतांतौशशिव्रतम ॥ १८० ॥ विप्रेणामंत्रितोविप्रःशूद्राहूतश्चयोभुंते ॥ आमंत्रयितृभोक्तारौशुध्येयमासिदवनशौ ॥ ८१ ॥
समानर्षिश्वयोगच्छेन्मातामलंसगोत्रजाम ॥ मातुलस्यसुतांचापिविप्रश्चांद्रायणंचरेत ॥ ८२ ॥ पीतशेषंजलंपीत्वाभुक्त्वोच्छिष्टमथान्य
कम. ॥ अत्त्वामूत्रपुरीषेपतुविप्रश्चांद्रायणंचरेत ॥ ८३ ॥ मृताहस्ताद्वगोमांसमत्त्वाभयमकामतः ॥ पीत्वाचंद्रव्रतंकुर्यात्पाकंनशुद्धिदंप
रम ॥ ८४ ॥ साग्निःसन्पंचयज्ञान्योनकुर्वीतद्विजाधमः ॥ परपाकरतोनित्यमान्नेम्याकोविवर्जकः ॥ ८५ ॥ अदाताचमलालुब्धः श्व
पचःपरिकीर्तितः ॥ सादितोस्यान्नमश्नातिसकुर्याद्देवव्रतम ॥ ८६ ॥ गणिकागणयोरन्नंयदन्नंहुयाचकम् ॥ सीमंतोन्नयनेभुक्त्वाद्वि

जश्चांद्रायणंचरेत् ॥ ८७ ॥ अज्ञानन्यःसमश्नीयात्पुत्रजन्मनियोद्विजः ॥ सोऽभक्ष्यसममश्नंतिद्विजश्चांद्रायणंचरेत् ॥ ८८ ॥ महापा
तकिनामन्नंयोऽश्नीयादज्ञानतोद्विजः ॥ अज्ञानात्तप्तकृच्छ्रंतुज्ञानाच्चांद्रायणंचरेत् ॥ ८९ ॥ प्रपानविषवल्मीकंतुप्रवृत्त्यावनवासिकान् ॥ च्युता
हतश्चदंताचप्रत्यक्षपानेश्चाःस्मृता ॥ १९० ॥ कश्चिदतद्विशुद्ध्यर्थमिच्छंतिव्रतमेदवम् ॥ दक्षिणांसवृषांगांचदद्युश्चद्विजभोजनम् ॥ ९१ ॥
गृहदाहेऽनिशोप्राप्तेतस्यादन्नाममश्नुते ॥ अभोज्यमशनंतुत्वभुक्त्वाचांद्रायणंचरेत् ॥ ९२ ॥ मद्यहस्तस्थितेदत्तभेयाद्विजःसमुपस्पृशेत् ॥
अमृतपानेनतुल्यंचपीत्वाचांद्रायणंचरेत् ॥ ९३ ॥ भुक्त्वाशय्यागतःपीत्वाविप्रश्चांद्रायणंचरेत् ॥ अभक्ष्येणसमंतद्धिप्रायश्चित्तंसमंभवे
त् ॥ ९४ ॥ आसनादूर्ध्वपादस्तुयश्चकृत्याचमथःकृतः ॥ परमुखेनयोभुंक्तेद्विजश्चांद्रायणाच्छुचिः ॥ ९५ ॥ उद्धृत्यवासहस्तेननकिंचित्निपव
तियोद्विजः ॥ सुरापानेनतत्तुल्यंपीत्वाचांद्रायणंचरेत् ॥ ९६ ॥ स्पृष्ट्वानयनमस्नायाद्यादितत्रनमश्नुते ॥ चरेच्चांद्रायणंशुद्ध्यैत्रीणिकृ
च्छ्राणिवाद्विजः ॥ ९७ ॥ चांद्रायणंनवश्राद्धेपराकोमासिकमतः ॥ त्र्यूनाब्देपादकृच्छ्रंस्यादेकाहःपुनराब्दिके ॥ ९८ ॥ स्नानेमन्येपुकु
र्वीतप्राणायामंजपंतथा ॥ यःस्वैरिणीनांचपुनर्भुवांचयःकामचाराद्विजयोपितांच ॥ स्तोधूतापाकमनापद्याद्विप्रःसचंद्रव्रतशुद्धिकृत्स्यात्
॥ ९९ ॥ वेश्मन्यज्ञातचांडालेद्विजातेर्यदितिष्ठति ॥ ब्रह्मकूर्चंचरेन्मासंत्रिस्नायीनियतेंद्रियः ॥ २०० ॥ स्नेहांश्चघृततैलादीन्वस्त्राणि
चासनानिच ॥ बहिःकृत्वादहेद्गेहंसंशुद्धोभोजयेद्द्विजान् ॥ १ ॥ गोविंशतिवृषंचैकंतेभ्योदद्याच्चदक्षिणाम् ॥ इमंचानिष्क्रयंब्रूयुःके
पिचांद्रायणत्रयम् ॥ २ ॥ अस्यपापस्यशुद्ध्यर्थंचरेत्सांतपनव्रतम् ॥ इमंचानिष्क्रयंदद्यादित्येकेमुनयोविदुः ॥ ३ ॥ महापातकशु
द्ध्यर्थंसर्वाणिष्कृतयोनरः ॥ नृपग्रामेशविद्वद्भिःकुर्वाणःशुद्धिमाप्यते ॥ ४ ॥ सुरामूत्रपुरीषाणांलीढ्वात्वेकमकामतः ॥ पुनःसंस्कारक

रणाच्छुध्यनाहपराशरः ॥ ५ ॥ अभक्ष्यभक्षणोविप्रस्तथैवापेयपानकृत ॥ व्रतमन्यत्प्रकुर्वीतवदंत्यन्येद्विजोत्तमाः ॥ ६ ॥ कुशा
ब्जाश्वत्थपालाशबिल्वोदुंबरपर्णिणां ॥ पीतेनजायतेशुद्धःपुत्रात्रेणनसंशयः ॥ ७ ॥ द्रोण्यामुशीरकुंभांभःश्वस्पृष्टंकुशवारिच ॥ पीत्वार
ण्यप्रपातोयंपंचगव्यंपिबच्छुचिः ॥ ८ ॥ भांडस्थितमभोज्यान्नंपयोदधिघृतंपिबेत ॥ द्विजोनरुपवासःस्याच्छूद्रोदानेनशुध्यति ॥ ९ ॥
तत्तोयपीतजीर्णागस्तप्तकृच्छ्रंचरेद्द्विजः ॥ वांतेतुतज्जलेमध्यःप्राजापत्यंसमाचरेत् ॥ १० ॥ रजकोद्यंबुपानेनप्राजापत्यंबुधैःस्मृतम ॥ वांते
जलेनदंष्टेतुशूद्रःस्यात्पादकृच्छ्रकृत ॥ ११ ॥ चांडालकूपपानेनमहदेनःप्रजायते ॥ गोमूत्रयावकाहारःशुध्येतदिवसैस्त्रिभिः ॥ १२ ॥
घृतंदधितथादुग्धंयस्तत्गोष्टमशुद्धिमान् ॥ आर्भगम्यगृहेभुक्त्वाकृत्वावाशूद्रभोजनम ॥ १३ ॥ द्विपदांवाद्विजोजग्ध्वामातृस्तोकयमथापिवा ॥
क्षुधार्तिपीडितःपश्चादितिप्राहपराशरः ॥ १४ ॥ मृतकान्नंद्विजोभुक्त्वात्रिरात्रोपोषणाच्छुचिः ॥ तोयपानेव्रमोंकुर्यात्पंचगव्यनिपवनम ॥
॥ १५ ॥ ब्राणेभ्योधिकंतदर्घवाप्रस्थंप्रस्थार्धमेववा ॥ घृतमुच्छिष्टमंस्पृष्टंप्रोक्षणाच्छुचितामियात ॥ १६ ॥ पयस्पंशूनंपक्वमन्नकांकाद्युपा
कृतम ॥ तावृसमस्थंनमेन्यागात्पूतंहेमांबुसेचनात ॥ १७ ॥ कचिद्वदंतिशुद्धिज्ञास्तनस्याग्निनावक्रडनम् ॥ केचित्प्रणवयुक्तेनवारिणाप्रोक्षणं
विदुः ॥ १८ ॥ केशकीटकमेदुष्टमन्नंमक्षिकयायुतम् ॥ मृद्भस्मवारिवातनक्षेतव्यंशुद्धिकारणम् ॥ १९ ॥ उदक्यात्वक्षणोस्पृष्टाक्षत्रिया
ण्याह्युदक्यया ॥ अर्धकृच्छ्रंचरेत्पूर्वातदर्धमपराचरेत ॥ २० ॥ प्राजापत्यंविशःपत्न्याविट्पत्नीपादमाचरेत ॥ शूद्रास्पृष्टाचरेत्कृच्छ्रंशूद्रीदा
नेनशुध्यति ॥ २१ ॥ ब्राह्मण्यात्राह्मणीस्पृष्टाउदक्योदक्ययाचरेत ॥ चरेत्तांपादकृच्छ्रेणकृतेस्नानेविशुध्यतः ॥ २२ ॥ द्वितीयापरयोःस्पृष्टा
ब्राह्मणीव्रतमाचरेद्व ॥ अपरक्षत्रियायाश्चवक्तव्यमवर्मन्ययोः ॥ २३ ॥ रजस्वलातुसंस्पृष्टाविष्टामूकरवायसैः ॥ स्नात्वायावत्रिरहारापंचग

व्येनशुध्यति ॥ २४ ॥ उदक्याब्राह्मणीस्पृष्टामेदमातंगभिल्लकैः ॥ गोमूत्रयावकाहारापड्रात्रेणविशुध्यति ॥ २५ ॥ उच्छिष्टाब्राह्म
णीस्पृष्टा [illegible] ॥ प्राजापत्येन [illegible] ॥ २६ ॥ वदंतिकवयःकेचिदब्दापक्षिशुद्धये ॥ प्राणायाम
शतं [illegible] ॥ २७ ॥ उच्छिष्टाब्राह्मणस्पृष्टाब्राह्मणोदक्ययाचेत्तु ॥ प्राजापत्यंचगायत्रींजपन्स्नात्वात्रिकालकृत ॥
॥ २८ ॥ [illegible] स्पृष्टाव्रतमाचरेत् ॥ अनुच्छिष्टस्पर्शनस्पर्शेस्नानकर्मयतःस्मृतम् ॥ २९ ॥ रजकालिकसंस्पर्शेउदक्यया
यान्वयोनितः ॥ प्राजापत्यं [illegible] ॥ ३० ॥ उदक्यांब्राह्मणींगत्वाक्षत्रियोवैश्यएवचा ॥ त्रिरात्रोपोषितःप्राश्यगव्यं
वान्यं [illegible] ॥ ३१ ॥ क्षत्रियांचैववैश्यांचजानन्गत्वास्वकामतः ॥ चरेत्सांतपनंविप्रस्तपोयस्यविमोचनम् ॥ ३२ ॥ वैश्यांचक्षत्रि
योगत्वावैश्यस्तुशूद्रिणींतथा ॥ प्राजापत्यंचरेन्नानीःइतिप्राहपराशरः ॥ ३३ ॥ उच्छिष्टाब्राह्मणीस्पृष्टाशुनावावृषलेनवा ॥ अशुद्धामाभवे
त्तावद्यावन्नस्यादुपोषणम् ॥ ३४ ॥ विप्रोप्यस्ववर्णांवैश्यांमहिष्योत्पन्नमतिः ॥ प्राजापत्यंचरेत्कृत्वाएकैकस्यांविशुद्धये ॥ ३५ ॥ शूद्रि
णींब्राह्मणोगत्वामासमासार्धमेववा ॥ गोमूत्रयावकाहारोमासार्धेनविशुध्यति ॥ ३६ ॥ मतोप्यस्ववर्णांगत्वाप्राजापत्यंसमाचरेत् ॥
वैश्यपत्नींसमागत्वाचरेत्सांतपनंशुचिः ॥ ३७ ॥ शूद्रींतुक्षत्रियोगत्वागोमूत्रयावकाशनः ॥ दशभिर्दिवसैःशुध्येद्वैश्योवाप्येवमेवहि ॥
॥ ३८ ॥ उत्तमागमनेनार्यःसर्वेतेस्युःकृशाग्निना ॥ महापथंचसंत्राज्याःस्वयानेनयोपितः ॥ ३९ ॥ चांडालमेदभिल्लानामभिगम्य
सकृत्स्त्रियः ॥ शुद्धेचपरोक्षेव्रतंकुर्यान्मासार्धमघमर्पणम् ॥ २४० ॥ पतितांचद्विजाग्र्यश्चेत्प्राजापत्यंचरेद्विजः ॥ तैलकस्यांस्त्रियंगत्वातथा
मद्यकृतःस्त्रियम् ॥ ४१ ॥ अज्ञानादभिगतोस्त्रीणांपुंसानुलोमजस्यच ॥ इमांनिष्कृतिमिच्छंतिघृतयोनिचकेचन ॥ ४२ ॥ पितृव्य

भ्रातृजायांतुमातृष्वसारमेवच ॥ भगिनींचैवधात्रींचगत्वाकृच्छ्रंसमाचरेत ॥ ४३ ॥ षण्मासान्केचिदिच्छंतिसंगम्यैताविशुद्धये ॥ कृ
च्छ्रंधर्मविदोविप्राःशुद्धितत्त्वार्थवेदिनः ॥ ४४ ॥ गुरुपत्नींद्विजागत्वामातृष्वसृदुहितृषु ॥ क्षिपच्छुद्ध्यर्थमात्मानंसुसमिद्धेहुताशने ॥
॥ ४५ ॥ उपाध्यायनृपाचार्यशिष्ययोषिद्गमोनरः ॥ षण्मासकृच्छ्रचरणाच्छुद्धिमाहपराशरः ॥ ४६ ॥ कृतचांडालसंस्पर्शःशकृन्मूत्र
करोद्विजः ॥ पञ्चरात्रोपोषणच्छुध्येद्भुक्त्वाचांतोनवद्युतिः ॥ ४७ ॥ ऊर्ध्वोच्छिष्टस्यसंशुद्ध्यैकेचित्प्राजापतिव्रतम् ॥ परांकंपंचगव्यं
चकेचिदाहुर्मनीषिणः ॥ ४८ ॥ उच्छिष्टोब्राह्मणःस्पृष्टउच्छिष्टेनद्विजेनतु ॥ आचम्यवतुशुध्येतांविष्णुनामानुकीर्तनात् ॥ ४९ ॥
क्षत्रियेणतुसंस्पृष्टोब्राह्मणोनक्तभोजनात् ॥ वैश्येनचैवसंस्पृष्टोनक्ताशीपंचगव्यप ॥ ५० ॥ शूद्रेणवतुसंस्पृष्टएकरात्रोपवासकृत् ॥
उच्छिष्टःपुनरेतंस्तुप्रोक्तंद्विगुणमर्हति ॥ ५१ ॥ उच्छिष्टःशूद्रसंस्पृष्टःशुनीवापिद्विजोत्तमः ॥ एकरात्रोपवासेनशुद्धःस्यादपरेविदुः ॥ ५२ ॥
अनुच्छिष्टोपियत्स्पर्शात्स्नात्वावर्णीविशुध्यति ॥ उच्छिष्टस्तस्यसंस्पर्शेचरेत्प्रजापतिव्रतम ॥ ५३ ॥ रजस्कान्त्यजःस्पृष्टःशुध्येत्तस्या
धर्माचरन् ॥ उदक्यात्राह्मणीकृच्छ्रात्प्राजापत्यादथापरे ॥ ५४ ॥ उदक्यात्राह्मणीस्पृष्टाशुनावाप्युपलेनवा ॥ नार्वार्त्तष्टानिराहारस्नात्वा
कालेनशुध्यति ॥ ५५ ॥ उदक्यामृतिकाम्लेच्छसंस्पर्शेस्नानमितरवौ ॥ दिवाहनांबुनास्नानाच्छुध्येद्विप्रोग्निसंनिधौ ॥ ५६ ॥ वदंत्यपां
पवित्रत्वंदिवासूर्यांशुमारुतैः ॥ मुनयोधर्मवेत्तारोरात्रौचंद्रांशुमारुतैः ॥ ५७ ॥ सकृच्चब्राह्मणःप्राश्यपञ्चहंपंचगव्यकम ॥ हेमादद्यात्त्व
षण्मासान्दत्वागांचविशुध्यति ॥ ५८ ॥ पंचाहेननृपःशुध्येत्पंचमाषान्ददत्त्वगाम् ॥ चतुर्भिर्दिवसैर्वैश्यश्चतुर्माषान्गवासह ॥ ५९ ॥
त्र्यहेणतुचतुर्थस्तुप्रदद्यान्माषत्रयंचगाम् ॥ सकृतस्पर्शनभवेच्छुद्धएतदाहपराशरः ॥ २६० ॥ रक्तंनिःसार्यविप्रस्यकामतोऽकामतोपिवा ॥ गायत्र्य

 

सहस्रेणजप्तेनसभवेच्छुचिः ॥ ६१ ॥ योयस्यहरतेभूमिंहेमगामश्वमेवच ॥ सतंयस्मात्प्रसाद्यैवतदुक्तःशुद्धिमाप्नुयात् ॥ ६२ ॥
गाख्यांयभूप्तेर्वापितेनसंशोधितःशुचिः ॥ द्रव्यदंडाद्विमुक्तोवातपसावाशुचिर्नरः ॥ ६३ ॥ तिलान्वसुनिकाष्ठानिअंत्यजस्यापिवे
मनः ॥ स्पृष्ट्वादेवलकंचैवसवासाःजलमाविशेत् ॥ ६४ ॥ श्वजंबूकवृकाद्यैश्चयदिदष्टोभवेन्नरः ॥ सचेलोजलमाविश्यदत्वांन्यंशुद्धि
र्हति ॥ ६५ ॥ शुनाघ्राणावलीढस्यनखैर्विलिखितस्यच ॥ यत्नानांदर्शनंकार्यमग्निनाचापचूडनम् ॥ ६६ ॥ अवज्ञांगुरवेकृत्वान
तस्यचभोजनम् ॥ नक्षत्रदर्शनंचान्येपराशरवचोयथा ॥ ६७ ॥ कुमारीचशुनादष्टाजंबुकेनवृकेणवा ॥ दिशंयामापतेत्सूर्यस्तां
दशंसाविलोकयेत् ॥ ६८ ॥ दिवसेपियदारात्रौशुनादष्टोभवेद्विजः ॥ विप्रंप्रदक्षिणीकृत्यघृतंप्राश्यविशुध्यति ॥ ६९ ॥ चतु
र्गांशुचिर्नारीकृताभिगमनापिच ॥ प्रक्षाल्यनाभितोधस्तादाचांतस्तुशुचिर्नरः ॥ ७० ॥ विप्रैमैथुनिनिस्नानंकेचिद्राग्निशिरोविना ॥
भियावद्विशस्तद्वल्लिंगशौचेंत्यजःशुचिः ॥ ७१ ॥ अभिगच्छन्सुतार्थंयदृतावृतौस्त्रियंद्विजः ॥ नकुर्वीतसचस्नानंनाभेरधस्तुशो
येत् ॥ ७२ ॥ त्वंकारंतुगुरोःकृत्वाहुंकारंतुगरीयसः ॥ प्रसाद्यैतावनश्नन्स्यात्स्नात्वाशुद्धोद्विजोत्तमः ॥ ७३ ॥ विवादेशास्त्रतोजि
जयोयस्यनजायते ॥ श्मशानेजायतेतस्यतमोभावेनदुष्कृतम् ॥ ७४ ॥ ताडयित्वातृणेनापिस्कंधेवाबध्यरज्जुना ॥ कलहाद
निर्जित्यतंप्रसाद्यविशुध्यति ॥ ७५ ॥ उद्बंधेतुचरेत्कृच्छ्रमतिकृच्छ्रंनिपातने ॥ कृच्छ्रातिकृच्छ्रोऽसृक्पातेकृच्छ्रोऽभ्यंतरशोणिते ॥ ७६ ॥
मूढ्वाचदग्ध्वाचशुद्धिःस्नानाद्विजन्मनाम् ॥ उपवासेनचैकेनब्रह्मकूर्चंचपावनम् ॥ ७७ ॥ प्रेतीभूतंचयःशूद्रंब्राह्मणोज्ञानदुर्बलः ॥ अनुग
च्छेन्नीयमानंत्रिरात्रमशुचिर्भवेत् ॥ ७८ ॥ त्रिरात्रेतुततःपूर्णेनदींगत्वासमुद्रगाम् ॥ प्राणायामशतंकृत्वाघृतंप्राश्यविशुध्यति ॥ ७९ ॥ अं ॥४१॥

गुल्यादंतकाष्ठंगतप्रत्यक्षंलवणंतथा ॥ मृत्तिकाभक्षणंचैवतुल्यंगोमांसभक्षणम् ॥ २८० ॥ कृत्वान्यतममेतेषांहितंशुद्ध्यर्थमात्मनः ॥ चरे
च्छिशिव्रतंविप्रइतिप्राहुर्मनीषिणः ॥ ८१ ॥ वदंतिकवयःकेचित्कृच्छ्रंसांतपनंतथा ॥ तदर्धंपादकृच्छ्रंवाप्राहुरन्येद्विजोत्तमाः ॥ ८२ ॥ अ
धोच्छिष्टोद्विजोज्ञानाद्यात्यघंनहिकिंचन ॥ भुक्त्वानाचम्यवाकुर्याद्विण्मूत्रेकेहनिष्कृतिः ॥ ८३ ॥ नक्तोपवासावाद्येतुअन्यत्राद्विगुणंचरेत् ॥
अष्टोत्तरशतंजप्त्वागायत्र्याःशुद्धिमर्हति ॥ ८४ ॥ अधोच्छिष्टोद्विजःस्पृष्टःशुनावावृषलेनवा ॥ नक्षत्रदर्शनेप्रायंतपंचगव्यपुरःसरम् ॥ ८५ ॥
अधोर्ध्वोच्छिष्टविप्राद्याःश्वोच्छिष्टाःशूद्रसंस्पृशः ॥ उपवासेनशुध्येयुःपंचगव्यस्यपानतः ॥ ८६ ॥ श्वकाकीकाकसंस्पृष्टोभुंजानोत्राह्मणो
यदि ॥ तदन्नस्यपरित्यागात्स्नानंकृत्वाविशुध्यति ॥ ८७ ॥ विनायज्ञोपवीतेनभोजनंकुरुतेयदि ॥ अथमूत्रपुरीषेवारेतःसेचनमेववा ॥
॥ ८८ ॥ त्रिरात्रोपोषितोविप्रःपादकृच्छ्रंतुभूमिपः ॥ अहोरात्रोमितोवैश्यःशुद्धिरेषापुरातनी ॥ ८९ ॥ विप्रस्यदक्षिणेकर्णेनित्यंवसति
पावकः ॥ अंगुष्ठेदक्षिणेपाणौतस्मात्तेनचसंस्पृशेत् ॥ २९० ॥ प्रेक्षणंशशिनोर्कस्यब्रह्मविष्ण्वीशसंस्मृतिः ॥ गायत्र्याःशतसाहस्रंसर्वपापह
रंस्मृतम् ॥ ९१ ॥ गायत्र्यष्टसहस्रंतुब्रह्महत्याविशोधनम् ॥ शूद्रवधेद्विजाग्र्यस्यगायत्रीत्रिसहस्रकम् ॥ ९२ ॥ राज्ञःपंचसहस्रंतुस्याद्विशश्च
तदर्धकम् ॥ योगेनगतशीलस्तुयदिवास्यात्सदानरः ॥ ९३ ॥ तावुभौसर्वदात्याज्यौनिश्चितंसर्वकर्मसु ॥ मक्षिकासंततिर्द्धाराविप्रपोब्रह्मवि
द्रवः ॥ ९४ ॥ आत्मस्त्रीनिजबालश्चआत्मवृद्धस्तथैवच ॥ आत्मनःशुचयःसर्वेपरेषामशुचीनितु ॥ ९५ ॥ उत्पन्नमातुरेस्नानंदशकृत्व
स्त्वनातुरः ॥ स्नात्वास्नात्वास्पृशेदेनंततःशुध्येत्सआतुरः ॥ ९६ ॥ विवाहोत्सवयज्ञेषुसंग्रामेजलसंप्लवे ॥ पलायनेतथारण्येस्पर्शदोषोन
विद्यते ॥ ९७ ॥ आद्यसंगीसमोदोषीसंगसंगीतदर्धतः ॥ तत्संगीतृतीयभागीतुरीयस्तुनदोषभाक् ॥ ९८ ॥ आद्यस्पृष्टुर्भवेत्स्नानंद्वितीय

स्यापितत्स्मृतम् ॥ शिरःप्रोक्षणमन्येषामन्यत्राचमनंविदुः ॥ ९९ ॥ पलाशशिंशुपाकाष्ठैर्दंतधावनकृन्नरः ॥ दिवाकीर्तिसमस्तावद्यावद्धेनुं
नपश्यति ॥ ३०० ॥ पद्मांश्मलोहफलकाष्ठचर्मभांडस्थलेवास्वयमेवशौचम् ॥ पुंसांनिशाम्बुध्वनिनिःसवानांस्त्रीणांचशुद्धिर्विहितासदापि
॥ १ ॥ स्नानंस्पृष्टनयेनस्यात्काष्ठंयदितत्स्पृशेत् ॥ नावारोहणवत्स्पर्शेतत्रोपस्पर्शनाच्छुचिः ॥ २ ॥ म्लेच्छभूतासनस्पर्शेक्षेत्रेवाय
देवांखले ॥ उपस्पृशेच्छिरःप्रोक्ष्यसंशुद्धोजायतेद्विजः ॥ ३ ॥ वस्त्रसंस्पर्शनेनस्यसचैलंभावगाहनम् ॥ अंगस्पर्शनवत्ताद्विवदंति
द्विजसत्तमाः ॥ ४ ॥ चांडालोदकसंस्पृष्टशुद्धःस्नानेनजायते ॥ तथातद्भांडसंस्पर्शेस्नानमाहुर्मनीषिणः ॥ ५ ॥ उदक्यास्पर्शनेस्नानमंशु
कनांगतोपिवा ॥ तत्स्पृष्टेपिभवेत्स्नानंतुल्याःसर्वारजस्वलाः ॥ ६ ॥ संस्पर्शेमेदभिल्लानांतथैवब्रह्मघातिनाम् ॥ पतितानांच
संसर्गेस्नानमेवंविधीयते ॥ ७ ॥ रजस्वलादिसंस्पर्शेउपस्पर्शनमुच्यते ॥ उदक्यायास्तृतीयेह्निकेचिदाचमनंविदुः ॥ ८ ॥ प्रथमेहनिचांडाली
द्वितीयेब्रह्मघातिनी ॥ तृतीयेरजकीप्रोक्ताचतुर्थेस्नानतःशुचिः ॥ ९ ॥ पुरुहूतःपुरादैत्यंत्रिशीर्षाह्वंजघानयत् ॥ तद्वधब्रह्महत्यायाःस्त्री
णांसंप्रददौफलम् ॥ ३१० ॥ आसांतत्प्रभृतिस्त्रीणामस्पृश्यत्वंसमाभवत् ॥ अंशैर्दिनत्रयेप्येतच्छुक्रंगुर्वादिकल्पिते ॥ ११ ॥ शंबराश्च
पुलिंदाश्चकेचटाश्चनटास्तथा ॥ एतान्रजकसंतुल्यान्केचिदाहुर्मनीषिणः ॥ १२ ॥ रजक्याद्यभिगम्यत्वेवैश्यागोमूत्रयावकम् ॥ पिबंति
षड्गुणाह्नोभिःकृच्छ्रंवाद्विगुणंभवेत् ॥ १३ ॥ ब्रह्मक्षत्रियविट्जाताःशूद्रास्तेनुक्रमेणतु ॥ क्रमातिक्रमतश्चान्येम्लेच्छांत्यवर्णसंभवाः ॥ १४ ॥
भोज्याशनास्तुसच्छूद्राअभोज्यान्नाःपरेस्मृताः ॥ आमाश्मानिभोज्यानिशृतमुच्छिष्टमुच्यते ॥ १५ ॥ दासनापितगोपालकुलमित्रार्ध
सीरिणः ॥ भोज्यान्नानापितश्चैवयश्चात्मानंनिवेदयेत् ॥ १६ ॥ पर्युषितंचिरस्थंचभोज्यंस्नेहसमन्वितम् ॥ यवगोधूमावस्नेहाततोगोरस

विक्रयाः ॥ १७ ॥ आपद्गतोद्विजोऽश्नीयाद्गृह्णीयाद्वायतस्ततः ॥ नसलिप्येतपापेनपद्मपत्रमिवांभसा ॥ १८ ॥ श्रपितंशूद्रगेहेन्नंकंदुपक्वंच
यद्भवेत् ॥ नीत्वांनद्यादिकेतद्वैप्रोक्ष्यभुंजन्नदोषभाक् ॥ १९ ॥ गायत्र्योंकारभूताभिःकेचिदद्भिरपोक्षणम् ॥ मन्यंतेविष्णुमंत्रेपकालिधर्मं
समाश्रिताः ॥ ३२० ॥ आमंमांसंघृतंक्षौद्रंस्नेहाश्चफलसंभवाः ॥ म्लेच्छभांडस्थितादुष्यानिष्क्रांतेशुचयःस्मृताः ॥ २१ ॥ आभीरभां
डसंस्थानिपयोदधिघृतानिच ॥ तावत्पूतंहितद्भांडंयावत्तत्त्रतिष्ठति ॥ २२ ॥ पूतानिसर्वपण्यानिकारुहस्तास्थितानिच ॥ आदत्तानि
चभक्ष्याणियत्नतस्तुद्विजातिभिः ॥ २३ ॥ सर्वस्योपस्करैर्युक्ताशय्यारक्तांशुकानिच ॥ पुष्पाणिचैवशुध्यंतिप्रोक्षितानिनसंशयः ॥२४॥
अलेपंमृन्मयंभांडंभांडसंचयएवच ॥ प्रोक्षणादेवशुध्यंतिसलेपंवाह्निचूलनात् ॥ २५ ॥ कांस्यंचभस्मनाशुध्येन्मद्यमांसविवर्जितम् ॥ सु
रामूत्रपुरीषेतुशुध्यतेतापलेपनैः ॥ २६ ॥ अलिप्तंमद्यपूर्वाद्यैस्ताम्रमम्लेनशुध्यति ॥ रजसास्त्रीमनोदुष्टानद्यश्चवेगसंयुताः ॥ २७ ॥ अवेग
मपियद्भूरिसरिद्वारिह्रदश्चयः ॥ सकृदस्पृश्यसंस्पृष्टोनदुष्यतिचसद्रदः ॥ २८ ॥ सत्येनपूयतेवाणीधर्मःसत्येनवर्धते ॥ तस्मात्सत्यंहि
वक्तव्यमात्मशुद्ध्यैद्विजोत्तमैः ॥ २९ ॥ रथ्याकर्दमतोयानिनावःपंथास्तृणानिच ॥ मारुतार्केणशुध्यंतिनिशिचंद्रर्क्षमारुतैः ॥ ३३० ॥
यथासंभवमुक्तानिप्रायश्चित्तानिसत्तमाः ॥ उक्तानुक्तानिसर्वाणिज्ञातव्यानिद्विजातिभिः ॥ ३१ ॥ प्रायश्चित्तंनयत्प्रोक्तंधर्मशास्त्रप्रवक्तृभिः
द्विजैस्तत्रप्रकल्प्यंस्याद्धर्मशास्त्रार्थचिंतकैः ॥ ३२ ॥ उक्तामयानिष्कृतयःसमासात्संशुद्धयेवर्णचतुष्टयस्य ॥ व्रतानितपांसिविहितानियानि
वक्ष्याम्यतस्तानिनिबोधतेति ॥ ३३३ ॥ ॥ इतिबृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांप्रायश्चित्तनिर्णयोनामषष्ठोऽध्यायः ॥
॥ ६ ॥ व्रतान्यथप्रवक्ष्यामिऐंदवादिक्रमेणतु ॥ पापक्षयःकृतैर्यैःस्याद्धर्मार्थेतुमहोदयः ॥ १ ॥ चंद्रवृद्ध्याचरेद्ग्रासान्कृच्छ्रेकृष्णेक्षयंनये

त ॥ चंद्रक्षयेनभोक्तव्यंयवमध्यंशशिव्रतम् ॥ २ ॥ विपरीतक्रमेणाश्नन्नादावादायग्रासयेत ॥ वर्धयेदन्यपक्षेतुपिपीलीमध्यमेवम् ॥
॥ ३ ॥ अष्टावष्टौसमश्नीयात्सव्रताप्रतिवासरम् ॥ अष्टग्रासिकमित्येतच्चांद्रायणमथापरम् ॥४॥ शतद्वयंतुपिंडानांचत्वारिंशत्समन्वितम् ॥
मासेमैवोपभुंजीतचांद्रायणमथापरम् ॥ ५ ॥ चतुरःप्रातरश्नीयात्सायंग्रासांश्चतावतः ॥ शिशुचांद्रायणंतज्ज्ञैःप्रोक्तंपापापनोदनम् ॥६॥
मध्यंदिनेयदश्नीयादष्टौग्रासान्दिनंप्रति ॥ चांद्रायणंयतीनांतुव्रतज्ञैःपरिकीर्तितम् ॥ ७ ॥ शिख्यंडसंमितान्ग्रासांश्चंद्रव्रतीप्रयोजयेत ॥
दोपःस्यादन्यथाभावेतस्मादुक्तंसमाश्रयेत् ॥ ८ ॥ एकभक्तैश्चनक्तैश्चतथैवायाचितैरपि ॥ उपवासैचतुर्भिश्चकृच्छ्रःपोडशभिर्दिनैः ॥
॥ ९ ॥ उष्णंजलंपयःसर्पिरेकैकंप्रत्यहंपिबेत् ॥ वायुभक्षस्त्र्यहंतिष्ठेत्तप्तकृच्छ्रोयमुच्यते ॥ १० ॥ पलमेकंजलंपीत्वापलमेकंतथापयः॥
पलमेकंतथाज्यस्यमानमेतत्प्रकोर्तितम् ॥ ११ ॥ पद्मोदुंबरराज्ञीचबिल्वपत्रकुशोदकैः ॥ प्रत्येकंप्रत्यहंगव्यमूत्रंशकृत्पयोदधि ॥
॥ १२ ॥ घृतंकुशोदकंपीत्वाउपवासंश्चसत्तम ॥ एभिःसंप्राशनैरुक्तंदिनैःसांतपनंद्विजः ॥ १३ ॥ सप्ताहेनतुकृच्छ्रोयंमुनिभिःपरि
कीर्तितः ॥ एतत्तुत्रिगुणंतज्ज्ञैर्महासांतपनंस्मृतम् ॥ १४ ॥ प्राजापत्याच्चकृच्छ्राच्चपराकस्त्रिगुणोमहान् ॥ एकभक्तंचनक्तंचअयाचितमु
पोषणम् ॥ १५ ॥ पादकृच्छ्रोयमुद्दिष्टस्त्रिघ्नंप्रजापतिव्रतम् ॥ अयमेवातिकृच्छ्रःस्यात्पाणिपूरान्नभोजनम् ॥ १६ ॥ कृच्छ्रातिकृच्छ्र
पयस्यादिवसानेकविंशतिम् ॥ दिनैर्द्वादशभिःप्रोक्तःपराकःसमुपोषितैः ॥ १७ ॥ एकद्व्यहत्र्यहादीनिनक्तंचैवतथाश्रुतम् ॥ संप्राश्यातिल
पिण्याकंतक्रंतोयंकुशोदकम् ॥ १८ ॥ पंचमेह्युपवासःस्यात्सौम्यकृच्छ्रोयमुच्यते ॥ १९ ॥ चांद्रायणेचकृच्छ्रेचत्रिकालंस्नानमाचरेत् ॥
स्नानद्वयंप्रकर्तव्यंव्रतेषुचापरेष्वपि ॥ २० ॥ शक्तिंज्ञात्वाशरीरस्यस्नानंकार्यंतथाव्रतम् ॥ असामर्थ्येनकायस्ययाच्यापर्षदनुग्रहम् ॥

॥ २१ ॥ ब्रह्मकूर्चंप्रवक्ष्यामिव्रतानामुत्तमव्रतम् ॥ कृतेनयेनमुच्यंतेमनुष्याःसर्वकिल्बिषैः ॥ २२ ॥ नीलिकायास्तुगोमूत्रंकृष्णायाःशकृ
दुद्धरेत् ॥ अभावेसर्ववर्णायाःकपिलायाःसमुद्धरेत् ॥ २३ ॥ पलानिपंचमूत्रस्यअंगुष्ठार्धंतुगोमयम् ॥ क्षीरंसप्तपलंग्राह्यंतथादध्नःपलत्र
यम् ॥ २४ ॥ घृतंचाष्टपलंग्राह्यंपलमेकंकुशांभसः ॥ मंत्रैःसर्वाणिचैतानिअभिमंत्र्याथमिश्रयेत् ॥ २५ ॥ गायत्र्याचैवगोमूत्रंगंधद्वारेति
गोमयम् ॥ आप्यायस्वेतिवैक्षीरंदधिक्राव्णोदधिस्मृतम् ॥ २६ ॥ तेजोसिशुक्रमित्याज्यंदेवस्यत्वाकुशोदकम् ॥ निष्पन्नंपंचगव्यंचपात्रे
त्क्रमतःपिबेत् ॥ २७ ॥ मध्यमेनपलाशस्यतत्पत्रेणपिबेद्द्विजाः ॥ द्वितीयंपद्मपत्रेणब्रह्मपत्रेणचापरम् ॥ २८ ॥ चतुर्थंताम्रपात्रेणतात्प
द्धृतकृन्नरः ॥ आलोड्यप्रणवेनैवनिर्मथ्यप्रणवेनतु ॥ २९ ॥ उद्धृत्यप्रणवेनैवप्राशयेत्प्रणवेनतु ॥ विष्णुंसंस्नापयेद्भक्त्यापंचगव्येनचा
र्चयेत् ॥ ३० ॥ कूष्मांडैर्जुहुयान्मंत्रैःपंचगव्यंहुताशने ॥ सव्यसहृत्याचगायत्र्यातथैवप्रणवेनतु ॥ ३१ ॥ ब्रह्मकूर्चमिदंप्रोक्तंकृत्वंपंचदिन:
मकम् ॥ पंचगव्यंचसंप्राश्यपंचरात्रोपवासकृत् ॥ नक्तेनवासमश्नीयाद्यावच्छक्तयोदिनानिच ॥ ३२ ॥ पंचाहिकंपारणकंव्रतस्यास्य
प्रकीर्तितम् ॥ निर्दहेत्सर्वपापानिब्रह्मकूर्चमिदंव्रतम् ॥ ३३ ॥ अन्येवदंतिकवयउपवासंविनाव्रती ॥ जपहोमादिकर्तव्यंदेवतार्चनमेववा ॥
॥ ३४ ॥ पंचगव्यंचहोतव्यंपंचगव्यंसमाश्नीयात् ॥ ब्राह्मणान्भोजयेत्तावद्यावत्कुर्यादिदंव्रतम् ॥ ३५ ॥ यत्त्वगस्थिगतंपापंविद्यतेपुरुषस्यहि
ब्रह्मकूर्चोदहेत्सर्वंसमिद्धोग्निरिवेंधनम् ॥ ३६ ॥ यावंतिपापानिभवंतिपुंसांद्रवादकामादथकामतोवा ॥ उक्तानितेषांमुनिनाव्रतानिशु
द्ध्यर्थमेतानिपराणिचास्य ॥ ३७ ॥ धर्मार्थमेतानिकृतानिपुंसांदद्युर्दिवौकस्त्वविमुक्तसिद्धीः ॥ अत्रापिपूज्यत्वमशेषलोकेतेजःशरीरेविचर
न्विभाति ॥ ३८ ॥ यस्यास्तिभीतिःपुरुषस्यपापादिच्छेच्चकर्तुंक्षयमेनसांयः ॥ प्रेत्यव्रतंचव्रतदानजाप्यंप्रोद्दिष्टमेतन्नतदन्यदस्ति ॥ ३९ ॥

वदंतिदानंमुनयःप्रधानंकलौयुगेनान्यदिहास्तिकिंचित् ॥ विशोधनंस्वार्गमिहापिपूज्यंवदामितस्मादथदानधर्मान् ॥ ४० ॥ इति
बृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायामैंदवादिव्रतनिर्णयोनामसप्तमोऽध्यायः ॥ ७ ॥ छ ॥ दानानिविधिनासार्धंजगौयानि
पराशरः ॥ व्यासस्यतानिवक्ष्यामिश्रूयतांद्विजसत्तमाः ॥ १ ॥ दानेनप्राप्यतेस्वर्गःसुखंदानेनलभ्यते ॥ इहामुत्रचदानेनपूज्योभवति
मानवः ॥ २ ॥ नदानात्परमोधर्मस्त्रिषुलोकेषुविद्यते ॥ तस्माद्दानंप्रदातव्यंयथाशक्त्यासदानरैः ॥ ३ ॥ मुमुक्षुवेदपियोगनिशाभिक्षामा
त्रोपजीविनः ॥ तेप्यमन्नंचवांछंतिकिंपुनःसानुरागिणः ॥ ४ ॥ सर्वोपस्करसंयुक्तंगृहंचगृहमातृकम् ॥ वृषाढ्युक्तंसीरंचवृषमेकंतथै
वच ॥ ५ ॥ गृष्टिचर्म्यायाःप्रदानंचधेनुदानमथापरम् ॥ द्विमुखींसौरभेयींचतिलधेनुमतःपरम् ॥ ६ ॥ घृतधेनुंपयोधेनुंहेमधेनुंसुविस्तरम् ॥
कृष्णाजिनप्रदानंचवाजिस्यंदनमाहसः ॥ ७ ॥ एकवाजिप्रदानंचतथातस्यपरिग्रहः ॥ सुखासनादियानानिहस्तिरथंतथागजम् ॥
॥ ८ ॥ गजदानंचवक्ष्यामिकन्यादानफलंयथा ॥ भूमिदानफलंवक्ष्येतुलापुरुषमेवच ॥ ९ ॥ हेमरूप्यप्रदानंचमाणकादिसमन्वितम् ॥
त्रपुसीसकताम्रादिसर्वधातुप्रदानवत् ॥ १० ॥ नक्षत्रतिथियोगेषुयद्यद्दानस्ययत्फलम् ॥ विद्यादानफलंतस्यप्राणदानस्ययत्फलम् ॥
॥ ११ ॥ अभयादिकदानानिप्रतिग्रहेयथाविधि ॥ इष्टापूर्तफलोपेतौसर्वविस्तरतोमया ॥ १२ ॥ शक्तिसूनोःश्रुतंपूर्वंकथयामिक्र
माच्छृणु ॥ गोभूहेमादिदानानांसर्वेषामप्यनुत्तमम् ॥ अन्नदानमपश्यंतसर्वेअपिदिवौकसः ॥ १३ ॥ अन्नार्थमातरिश्वायमन्नार्थंचतथा
नलः ॥ अन्नार्थंसवितादेवोवातिज्वलतिभासते ॥ १४ ॥ अन्नकामःससर्जेदंविधिरप्यखिलंजगत् ॥ अन्नात्परतरंसत्त्वंनभूतंनभविष्य
ति ॥ १५ ॥ दद्याद्योहरहस्तस्मादन्नंविप्रायमानवः ॥ शृतंवायदिवाचामंसस्वर्गेसुखमेधते ॥ १६ ॥ शोभनान्नाभृतान्कुंभान्पक्वान्न

रिपूरितान् ॥ अपूपैर्मोदकाद्यैर्वादत्वादिविसुखंवसेत ॥ १७ ॥ मणिकंकलशान्वापियोभावयतिशक्तितः ॥ सुशुभाद्विर्द्विजोकस्सुसपृ
ाशोदिवंव्रजेत ॥ १८ ॥ योद्विजान्पाययेत्तोयमन्यानपिपिपासुकान् ॥ प्रपाश्चभावयेद्ग्रीष्मेदेवलोकमवाप्नुयात् ॥ १९ ॥ खट्वांतृणा
कंदद्याद्वर्षासुचप्रतिश्रयम् ॥ पादाभ्यंगंतथैवधःशीतेचावरणानिच ॥ २० ॥ उपानत्पादुकेचैवददत्कामानवाप्नुयात् ॥ सप्तधा
यसमायुक्तंसर्वस्नेहसमन्वितम् ॥ २१ ॥ सर्वोपस्करसंयुक्तंसर्वालंकारभूषितम् ॥ हिरण्यगावृमाश्वश्वतूलशय्यापधानकः ॥ २२ ॥
रस्त्रीभूषणैर्युक्तंसकांस्यताम्रभाजनम् ॥ षट्धान्यादिसमायुक्तंददत्पात्रायमानवः ॥ २३ ॥ पक्वेष्टकचितंकृत्वासर्वलक्षणसंयुत
॥ मृन्मयंवातथावेश्मकृत्वावाश्ममयंतथा ॥ दत्वास्थानंमवाप्नोतिप्राजापत्यमसंशयम् ॥ २४ ॥ प्राकारायत्रसौवर्णागृहाण्यु
न्तराणिच ॥ माणिक्यगारुडैर्वज्रैर्मौक्तिकैर्भूषितानिच ॥ २५ ॥ देवकन्यासहस्रेणसंवृतोगीतनृत्यकैः ॥ सेव्यमानोम
संघैर्वधसासहसंवसेत ॥ २६ ॥ अनड्वाहौचधूर्वाहौबलवंतौसुलक्षणौ ॥ तरुणौसुविषाणौचघंटाभरणभूषितौ ॥ २७ ॥ अ
ग्रावेककर्णौचसशिरौदक्षिणान्वितौ ॥ आहूययोद्विजाग्र्यायभक्त्यादद्यात्तुमानवः ॥ २८ ॥ सोनडुद्रोमतुल्यानिस्वर्गेवपाणि
ष्ठति ॥ अप्सरोभिर्वृतोनित्यंसेव्यमानःसुरासुरैः ॥ २९ ॥ एकोपिहिवृषोदेयोधूर्वहःशुभलक्षणः ॥ अरोमश्चापिरिक्तिष्टोयस्मात्स
शगोसमः ॥ ३० ॥ एकेनदत्तेनवृषेणयस्माद्भवंतिदत्तादशसौरभेय्यः ॥ माहेय्यपीयंधरणीसमानानस्माद्वृषात्पूज्यतमोस्तिकोन्यः ॥
३१ ॥ गृष्टिदानंप्रवक्ष्यामियथादेयंद्विजोत्तमे ॥ योविधिर्दक्षिणायाश्चतथासर्वन्निबोधत ॥ ३२ ॥ एकरात्रोषितःस्नातोगोदातापंचगव्य
॥ पंचामृतेनसंस्नाप्यसंपूज्यगरुडध्वजम् ॥ ३३ ॥ सवस्त्रांवत्ससंयुक्तांसितयज्ञोपवीतिनीम् ॥ सुविषाणांसुरूपांचशुभलक्षणसंयुताम् ॥

॥ ३४ ॥ हेमकल्पितशृंगांन्विमुरूप्यचरणाग्रकाम् ॥ पयस्विनींसुशीलांचहिरण्योपरिसंस्थिताम् ॥ ३५ ॥ हिरण्यंवाग्रयित्वाग्रेसद्द्विजायो
पपादयेत् ॥ प्रत्यङ्मुखायविप्रायग्रीष्टिचतामुदङ्मुखीम् ॥ ३६ ॥ त्वमिमांप्रतिगृह्णीष्वप्रीतोस्तुकेशवोनयम ॥ इतिदत्वोदकंहस्तेपदा
न्यष्टौविसर्जयेत् ॥ ३७ ॥ आवर्तेत्ततःपश्चात्प्रणम्यशिरसाद्विजम् ॥ अनेनविधिनाधेनुंयोविप्रायप्रयच्छति ॥ ३८ ॥ सविष्णुप्रीणनाद्या
तिविष्णुलोकमसंशयम् ॥ आत्मनःपुरुषान्सप्तप्रागधस्ताच्चसप्तवै ॥ ३९ ॥ आत्मानंसप्तजन्मोत्थात्पातकान्मोचयेन्नरः ॥ पदेपदेसवत्साया
धेनोःप्राप्नोतिमानवः ॥ फलंयज्ञसहस्रस्यश्रुत्वाचैवंपराशरात् ॥ ४० ॥ सर्वकामसमृद्धात्मासर्वलोकेषुपूजितः ॥ नाप्राप्यघोघहंताचयाव
दिंद्राश्चतुर्दश ॥ ४१ ॥ इक्ष्वाकुभिश्चयदुभिरन्यैश्चबहुभिर्नृपैः ॥ यैरेवंगौःप्रदत्तावैतएवंत्रिदिवंययुः ॥ ४२ ॥ पश्यंतिदीयमानांयेयेभवंत्य
नुमोदकाः ॥ तेपिपापाद्विनिर्मुक्ताविष्णुलोकमवाप्नुयुः ॥ ४३ ॥ ॥ अथउभयतोमुखीदानम् ॥ ॥ पादद्वयंमुखंयोन्यांप्रसुवंत्याःप्रदृ
श्यते ॥ तदासाद्विमुखीज्ञेयाभूर्गौर्यावन्नसूयते ॥ ४४ ॥ क्षोणीतुल्यातदासागौःसर्वैरुक्तामुनीश्वरैः ॥ सापिप्राग्विधिनादेयासकांस्यद्रोहिनी
द्विजाः ॥ ४५ ॥ एकत्रपृथिवीसर्वासशैलवनकानना ॥ तस्यागौर्ज्यायसीसाक्षादेकत्रोभयतोमुखी ॥ ४६ ॥ गोर्वत्सस्यतुलोमानियावत्सं
ख्यानिसंतिहि ॥ तावत्संख्यानिवर्षाणिब्रह्मलोकेमहीयते ॥ ४७ ॥ अरोगामपरिक्लिष्टांधेनुंवागामथांपिवा ॥ दत्वास्वर्गमवाप्नोतियावदाभू
तसंक्षयम् ॥ ४८ ॥ तिलधेनुंप्रवक्ष्यामिप्रीणनायहरेरिमाम् ॥ ययातुष्यतिगोविंदस्तिलधेन्वाप्रदत्तया ॥ ४९ ॥ ब्रह्मादिपर्णहागोघ्नःपितृ
मातृसुहृद्वधात् ॥ अग्निदोगुरुहाचैवतथैवगुरुतल्पगः ॥ ५० ॥ सर्वपापसमायुक्तोयुक्तोयश्चोपपातकैः ॥ सर्वैःपापैःप्रमुच्येततिलधेन्वाप्रद
त्तया ॥ ५१ ॥ अनुलिप्तेमहीपृष्ठेवस्त्राजिनसमावृते ॥ धर्मज्ञाःकेचिदिच्छंतिकुतपेचतिलास्तृते ॥ ५२ ॥ आस्तीर्यत्वाविकंभमौतत्रकृष्णा

जिनंपुनः ॥ तिलांस्तुप्रक्षिपेत्कृष्णांस्तत्राढकचतुष्टयम् ॥ ९३ ॥ कुर्याद्वुत्तरतोऽभ्यर्णेआंढकेनतुवत्सकम् ॥ सर्वैरत्नैरलंकुर्यात्सौरभेयीं
सवत्सकाम् ॥ ९४ ॥ आस्यंगुडमयंतस्याःसास्नासूत्रमयीतथा ॥ ताम्रपृष्ठेक्षुपादाचकार्यामुक्ताफलेक्षणा ॥ ९५ ॥ प्रशस्तपत्रश्रवणाफल
दंतवतीतथा ॥ शुभस्रङ्मयलांगूलानवनीतस्तनान्विता ॥ ९६ ॥ नारंगैर्बीजपूरैश्चतथावैनारिकेलकैः ॥ बदराम्रकपित्थैश्चमणिमुक्ताफ
लार्चिता ॥९७॥ सितवस्त्रयुगच्छन्नाशतपत्रप्रपूजिता ॥ धेनुमीदृग्विधांकृत्वाश्रद्धयापरयान्वितः ॥९८॥ कांस्योपदोहनांदद्यात्केशवःप्रीय
तामिति ॥ कुर्याच्चगृष्टिवाद्विद्वानिमामप्युत्तरामुखीम् ॥९९॥ सम्यगुच्चार्यविधिनादत्त्वैतेनद्विजोत्तमाः ॥ सर्वपापैःस्वयंमुक्तपितरंचापितामहम्
॥१००॥ प्रपितामहंतथापूर्वंपुरुषाणांचतुष्टयम् ॥ पुत्रपौत्रमधस्ताच्चतेषांचैवचतुष्टयम् ॥१०१॥ द्विजेंद्रास्तारयत्येतांस्तिलधेनुप्रदोनरः ॥यश्चगृ
ह्णातिविधिवत्पुरुषान्सोपितावतः ॥ १०२ ॥ चतुर्दशतथायेचददतश्चानुमोदकाः ॥ दीयमानांचपश्यंतितिलधेनुंचयेनराः ॥ १०३ ॥
प्रयोगमपिशृण्वंतिपठ्यमानंचमानवाः ॥ तेप्यशेषविनिर्मुक्ताविष्णुलोकंप्रयांतिवै ॥ १०४ ॥ प्रशांतायसुशीलायकृशायामत्सरायच ॥
तिलधेनुंनरोदद्याद्वेदस्नातायसोदते ॥ १०५ ॥ त्रिरात्रंसतिलाहारस्तिलधेनुंददातियः ॥ एकरात्रंपुनर्भक्त्वातिलान्नत्तिप्रयत्नतः ॥ १०६ ॥
दातुर्विशुद्धपापस्यतस्यपुण्यवतोद्विजः ॥ चांद्रायणादप्यधिकंशस्तंतत्तिलभक्षणम् ॥ १०७ ॥ एवंप्रतिग्रहीतांपिवृत्तवान्विधिनाद्विजः ॥
सतारयातिदातारमात्मानंचनसंशयः ॥ १०८ ॥ प्रतिग्रहसुदीप्ताग्नौदग्धविप्रमुखेरिताः ॥ नस्फुरंतीहतन्मंत्राजपहोमादिकेषुच ॥ १०९ ॥नन्द
नंदीयतेतस्मैनतंकर्मणियोजयेत् ॥ निष्फलंतत्कृतंकर्ममृतस्यौषधदानवत् ॥ ११० ॥ अथातःसंप्रवक्ष्यामिघृतधेनुमपिद्विजाः ॥ येनसावि
धिनादेयातंप्रवक्ष्याम्यशेषतः ॥ १११ ॥ ददामिधेनुंघृतपूरकल्पांविधिंचवस्तूनिचयैःप्रकल्प्य ॥ तस्याःप्रदानेनफलंचयत्स्यात्क्रियांच

पात्रंत्वनुपर्वयच्च ॥ ७२ ॥ गोक्षीरसर्पिर्मधुखंडदध्नासंस्नाप्यविष्णुंशुभवारिणाच ॥ संपूज्यपुष्पैश्चविलिप्यगंधैर्द्रव्यान्निवेद्यंचसधूपदी-
पम् ॥ ७३ ॥ घृतंचवह्निर्घृतमेवसोमोघृतंचसूर्योघृतमेववारि ॥ तस्मात्प्रदद्याद्घृतमेवविद्वान्घृतेप्रदत्तेसकलंप्रदत्तम् ॥ ७४ ॥ घृतेनग
व्येनतुपूर्णकुंभःप्रकल्प्यतेगौःकरकश्चवत्सः ॥ हिरण्यगर्भामणिरत्नशोभांकुर्याच्चकर्पूरसुचारुनासाम् ॥ ७५ ॥ शृंगेचकृष्णागुरुदारुणश्च
सौवर्णनेत्रेपटसूत्रसास्ना ॥ क्षौमंचपुच्छंगुडदुग्धवक्त्रंजिह्वाकृतस्यावरशर्करायाः ॥ ७६ ॥ द्राक्षोत्ततीसखर्जूरैरन्यैःस्वादुफलैरपि ॥ उर
स्यास्तत्रकर्तव्यास्ताम्रंपृष्ठंचधीमता ॥ ७७ ॥ इक्षुयष्टिमयाःपादाःशफारौप्यमयास्तथा ॥ धान्यैश्चसप्तभिःपार्श्वेलोमानिसितसर्षपैः ॥
॥ ७८ ॥ कांस्यदोहाप्रकर्तव्यासितवस्त्रावृतातथा ॥ सितच्छत्रसमायुक्तासितचामरभूषिता ॥ ७९ ॥ वत्सस्यकुर्यादितिभूषणानिप्रोक्ता
निसर्वाण्यपियानिधेनोः ॥ अंगानिसर्वाणिचतद्वदस्यछत्रंचवस्त्राणितथैवविप्राः ॥८०॥ गृहाणचैनांममपापहृत्यैदुस्तारसंसारपयोधिपोतः ॥
संसारतारोभवभूमिदेवस्वर्गप्रदानक्षमविप्रराज ॥ ८१ ॥ विष्णुःसुरेशोघृतरश्मिरस्यादानेनतुष्टास्तुवरंकिरंतु ॥ व्याहृत्यचैतद्द्विजहस्ततो
यंदत्वाक्षमस्वेतिचवाग्विधेया ॥ ८२ ॥ दत्तंद्विजेनात्रचपूर्वमुक्तंसंप्राश्यसर्पिर्व्रतमात्मशुद्ध्यै ॥ कायप्रमुक्तोखिलकिल्बिषैःसप्राप्नो
तिकामान्घृतदुग्धमिश्रान् ॥ ८३ ॥ घृतक्षीरवहानद्योयत्रपायसकर्दमाः ॥ तेषुलोकेषुविप्रेशासपुण्येषूपजायते ॥ ८४ ॥ पितुरूर्ध्वंचयेस
प्तपुरुषास्तस्ययेप्यधः ॥ तेषुतान्द्विजलोकेषुसनयेन्यस्तकिल्बिषः ॥ ८५ ॥ सकामानामियंव्युष्टिःकथितातातवसुव्रत ॥ विष्णुलोकंनरायां
तिसकामाघृतधेनुदाः ॥ ८६ ॥ जलधेनुंप्रवक्ष्यामिप्रीतयेदत्तयायथा ॥ देवदेवोहृषीकेशःसर्वेशःसर्वभावनः ॥ ८७ ॥ जलकुंभंद्विजश्रे
ष्ठसुवर्णरजतास्थितम् ॥ सरत्नगर्भसर्वैस्तुग्राम्यैर्धान्यैःसमन्वितम् ॥ ८८ ॥ सितवस्त्रयुगच्छन्नंदूर्वापल्लवशोभितम् ॥ कुष्टमांसीमुरो

शीरवालकामलकैर्युतम् ॥ ८९ ॥. प्रियंगुपत्रसंयुक्तांसितयज्ञोपवीतिनम् .॥ सोपानहंचसच्छत्रंदर्भोविष्टरसांस्थतम् ॥ ९० ॥
चतुर्भिःसघृतैःपात्रैस्तिलपूर्णैश्चतुर्दश ॥ स्थगितंदधिपात्रेणघृतक्षौद्रवतामुखे ॥ उपोषितःसमभ्यर्च्यवासुदेवंसुरेश्वरम् ॥ ९१ ॥ पुष्पधू
पोपहारैश्चयथाविभवसंभवम् ॥ तस्मिन्कुंभेलिखेद्धेनुंसवत्सांयक्षकर्दमैः ॥ ९२ ॥ प्रतिष्ठांतत्रकुर्वीतमंत्रैर्वेदचतुष्टयैः ॥ कल्पयेज्जलधे
नुंतांसमभ्यर्च्यजनार्दनम् ॥ ९३ ॥ पूजयेद्वत्सकंतद्वत्कृतंजलमयंबुधः ॥ अत्रोचुरपरेकेचित्पूजयेद्घृतनिर्मितांम् ॥ ९४ ॥ पंचांशेनतुकुं
भस्यचतुर्थांशेनवापरे ॥ एवंसंपूज्यगोविंदंजलधेनुंसवत्सकाम् ॥ ९५ ॥ सितवस्त्रधरःशांतोवीतरागोविमत्सरः ॥ दद्याद्विप्रायतांविप्राःप्री
तयेजलशायिनः ॥ ९६ ॥ जलशायीजगद्योनिःप्रीयतांकेशवोमम ॥ इतिचोच्चार्यविप्रेंद्राविप्रायप्रतिपादये ॥ .९७.॥ अपक्वाशनिनाभा
व्यमहोरात्रमतःपरम् ॥ अनेनविधिनादत्वाजलधेनुंद्विजोत्तमाः ॥ ९८ ॥ सर्वाह्लादमवाप्नोतियद्यद्ध्यायतिमानवः ॥ शरीरारोग्यदीर्घा
युःप्रशस्यसर्वकामुकः ॥ ९९ ॥ नृणांभवतिदत्तायांजलधेनौनसंशयः ॥ तेपिदानंविनायांतिविष्णुलोकमसंशयम् ॥ १०० ॥ हेमाद्र्यां
वुतिलैर्विद्धन्धेनुर्यद्यपिकल्पिता ॥ तथापितेचभक्ताःस्युर्धर्मशास्त्रमनाकृताः ॥ १ ॥ भक्षणीयंचयद्वस्तुधेन्वंगेषुप्रकल्पितम् ॥. तत्सादृश्यं
तदाभ्येतिवेदमंत्रैःप्रतिष्ठितम् ॥ २ ॥ पुनःसंवृतमंत्रेषुतदोकुंचनमुद्रया ॥ कृतेविसर्जनेतेषांवस्तुरूपंपुनर्भवेत् ॥ ३ ॥ अथान्यत्संप्रव
क्ष्यामिदानानामुत्तमंपरम् ॥ यद्दत्त्वामानवायांतिसायुज्यंपरवेधसः ॥ ४ ॥ धेनुर्देयासुवर्णस्यकारयित्वाद्विजातये ॥ यांदत्त्वाप्राङ्महीपा
लाब्रह्मणःसदनंगताः ॥ ५ ॥ साचतुर्भिस्त्रिभिर्वापिशुद्धवर्णपलैर्द्विजाः ॥ पलाभ्यामपिचद्वाभ्यांपलेनैकेनवापुनः ॥ ६ ॥ हीनानैवप्रकर्त
व्यासत्यांसंपदिसद्द्विजाः ॥ सतिवित्तेतुहीनांयद्दातुर्नाशयतेफलम् ॥ ७ ॥ चतुर्थांशेनधेन्वास्तुहेमंवत्सं‌प्रकल्पयेत् ॥ सर्वरत्नैरलंकुर्याद्द

क्ष्यमाणक्रमेणतु ॥ ८॥ वत्सकंराजतंकुर्यादन्नयुरन्येविपाश्चितः ॥ अलंकाराश्चसर्वेपिगोवद्रत्नैःप्रकल्पिताः ॥ ९ ॥ सकाशाद्वासुदेवस्य
यांशुश्रावयुधिष्ठिरः ॥ दत्वाप्राप्तोहरेर्लोकंसामयेयमुदीरिता ॥ ११० ॥ मुक्ताफलशफाकार्याप्रवालकविषाणिका ॥ पद्मरागाक्षियुग्मा
चघृतपात्रस्तनान्विता ॥ ११ ॥ कर्पूरागुरुनासावाशर्करामयजिह्विका ॥ मृष्टान्नमुखसंयुक्ताशंखशृंगांतरामता ॥ १२ ॥ कांतिशुक्ति
ललाटाचद्राक्षादिरदनास्मृता ॥ सुपद्मयुग्मपार्श्वासाक्षौमप्रसाम्नावतीतथा ॥ १३ ॥ इक्ष्वंघ्रिगुडजांनुश्चपंचगव्यगुदास्मृता ॥ नालिके
रैश्चकर्तव्यौकर्णौपृष्ठंचकांस्यकम् ॥ १४ ॥ सपट्टसूत्रलांगूलासप्तधान्यसमन्विता ॥ सुवर्णधेनुमार्यायविप्रायप्रतिपादयेत् ॥ १५ ॥ अ
श्वमेधसहस्रस्यदत्वाफलमवाप्नुयात् ॥ कुलानांद्विसहस्रंतुस्वर्गमायातिनिश्चितम् ॥ १६ ॥ किमन्यैर्बहुभिर्दानैरलंहेमगवाऽनया ॥ हेमधेनु
प्रदानेनकृतार्थोजायतेनरः ॥ १७ ॥ हिरण्यगर्भोभगवान्प्रीयतामितिकीर्तयेत् ॥ उपवासविशुद्धात्मादद्यात्सोमरविग्रहे ॥ १८ ॥ दीयमा
नांचपश्यंतियेनराहेमगामिमाम् ॥ पठ्यमानांचशृण्वंतितेपियांतित्रिविष्टपम् ॥ १९ ॥ यत्रास्तेलिखितागेहेसुवर्णधेनुसंततिः ॥ रक्षोभूत
पिशाचाद्यास्ततोनश्यंतिदूरतः ॥ १२० ॥ एतामयोक्तास्तववत्ससर्वागृष्ट्यादिकाविस्तरतश्चगावः ॥ इक्ष्वाकुवैन्यप्रभृतीक्षिती
शाजग्मुर्दिवंयांविधिवत्प्रदाय ॥ २१ ॥ ॥ इतिसुवर्णधेनुदानम् ॥ ॥ अथकृष्णाजिनस्यापिवक्ष्येदानविधिंशुभम् ॥ प्र
माणंत्वविधेयंस्ययस्मैविप्रायदीयते ॥ २२ ॥ वैशाख्यांपूर्णिमायांचकार्तिक्यामपिसत्तमाः ॥ एतयोस्तत्प्रदातव्यंराकेसोमग्रहेपि
वा ॥ २३ ॥ अक्लिष्टमच्छिद्रमलोमकंचसप्राणरंध्रंसशफंसशेफम् ॥ सांडप्रदेशंसविषाणवक्रंशस्तंप्रदानेअसितमृक्षचर्म ॥ २४ ॥
एवमेतद्विधंचर्मगृहीत्वाद्विजपावनाः ॥ कल्पयेद्वत्सतद्वच्चहेमशृंगादिकंतथा ॥ २५ ॥ शृंगेहेममयेतस्यशफाश्चरजतस्यच ॥ मुक्ताफलै

श्वलांगूलंकुर्याच्छाद्यविवर्जितः ॥ २६. ॥ अनुलिप्तेमहीपृष्ठेप्रास्तृतेकुतपांशुके ॥ तत्रप्रसारयेन्मार्गंतिलैस्तदथपूरयेत् ॥ २७ ॥
वदंतितद्विदःसर्वेंन्नतुद्रोणैस्तुपूरयेत् ॥ पुंसोनाभिप्रमाणंतुराशिंकुर्यात्परेविदुः ॥ २८ ॥ दातृमात्रंवदंत्यन्येराशिंकुर्यादितिद्विजाः ॥
तिलैश्चपूरयत्पश्चादजिनंचसमंततः ॥ २९ ॥ हेमनाभंचतत्कुर्याद्धेम्नाकर्षेणसत्तमाः ॥ शक्त्यावापिप्रकर्तव्यंमनःशुद्धिर्यथाभवेत् ॥
॥ १३०.॥ सौवर्णंक्षीरपूर्णंचपात्रंप्राच्यांनिधापयेत् ॥ राजतंदधिपूर्णंचन्यसेद्दक्षिणतोद्विजाः ॥ ३१ ॥ ताम्रमाज्यभृतंपात्रंपश्चि
मायांदिशिस्मृतम् ॥ क्षौद्रपूर्णंतथाकांस्यमुत्तरस्यांक्रमेणतु ॥ ३२ ॥ शक्त्यावापिप्रकर्तव्यंवित्तशाठ्यंनकारयेत् ॥ दद्याद्वेदवि
देचैतद्ब्राह्मणायाहिताग्नये ॥ ३३ ॥ परिधाय्याहतेवस्त्रेअलंकृत्यचभूषणैः ॥ मार्गंतच्चापिवासोभिःसमाच्छाद्यसमंततः ॥ ३४ ॥
प्रतिदिशंतुमार्गस्यसवस्त्रवत्सभूषणाः ॥ चतस्रोगृष्टयःकार्याइत्यन्येतद्विदोविदुः ॥ ३५ ॥ वदंतिमुभयोगंथामार्गमाहात्म्यवेदिनः ॥
नानाविधाश्चविद्वांसःपुराणार्थविदोपरे ॥ ३६ ॥ यस्तुकृष्णाजिनंदद्यात्सखुरंशृंगसंयुतम् ॥ तिलैःप्रच्छाद्यवासोभिःसर्वरत्नैरलं
कृतम् ॥ ३७ ॥ ससमुद्रगृहीतेनसशैलवनकानना ॥ चतुरन्ताभवेद्दत्तापृथिवीनात्रसंशयः ॥ ३८ ॥ कृष्णाजिनेतिलान्कृत्वा
हिरण्यंमधुसर्पिषी ॥ ददातियस्तुविप्रायसर्वंतरतिदुष्कृतम् ॥ ३९ ॥ यःकृष्णाजिनमास्तीर्यहेमरत्नयुतैस्तिलैः ॥ वस्त्रावृतंसोप
वासोविष्णोरायतनेतथा ॥ १४० ॥ वैशाख्यांपौर्णमास्यांचकार्तिक्यांवासमाहितः ॥ दद्याद्विप्रेतपोयुक्तेसद्वृत्तेचयतेंद्रिये ॥ ४१ ॥
आहिताग्नौससंतानेचर्मतद्भूरिदक्षिणम् ॥ यावंत्यजिनलोमानितिलावस्त्रस्यतंतवः ॥ ४२ ॥ तावंत्यब्दसहस्राणिदाताविष्णुपुरेवसे

१ मृगस्येदमार्गंचर्म ।

त् ॥ विशेषभपरेन्नयुर्विंपुर्वायनयोर्द्वयोः ॥ तदत्रणंवहिर्लोमप्राग्ग्रीवंचप्रसारयेत् ॥ ४३ ॥ चतसृषुतथादिक्षुसुवर्णरजतानिच ॥ विधा
यशक्त्यापात्राणिघृताद्यैःपूरितानिच ॥ ४४ ॥ तस्यंपश्चात्समिद्धाग्निपरिसमूह्यतंपुनः ॥ पर्युक्ष्यचपरिस्तीर्यमहाव्याहृतिभिस्ततः ॥
॥ ४५ ॥ तत्रसाज्यांस्तिलान्हुत्वसविप्रायप्रतिपादयेत् ॥ नाभिस्पृशन्नदीनोयेमार्गंगृह्णाम्यहंत्विदम् ॥ ४६ ॥ धीमान्दद्याद्द्विजेंद्रायवाच
यित्वाप्रतिग्रहम् ॥ पश्चाद्धस्तोदकंदद्यादेषाप्रतिग्रहस्थितिः ॥ ४७ ॥ यमगीतामथोगाथामुदाहरंतितद्विदः ॥ दातॄणांसत्तमानांच्चविशे
षप्रतिपत्तये ॥ ४८ ॥ गोभूहिरण्यसंयुक्तंमार्गमेकंददातियः ॥ ससर्वपापकर्मापिसायुज्यंब्रह्मणोव्रजेत् ॥ ४९ ॥ प्रोक्तेनचैतेनमुनीशमा
र्गंदद्याद्द्विजेंद्रेविधिनाप्रयुक्तम् ॥ पापानिहत्वासपुरातनानिप्रयातिवेधोवपुषीवयोगी ॥ १५० ॥ सुखासनंचयोदद्याद्विमानाख्यमनुत्तमम् ॥
देवयानैर्दिवंयातिस्तूयमानःसुरासुरैः ॥ ५१ ॥ योरथंहयसंयुक्तंहेमपुष्पैलंकृतम् ॥ कृतरज्जुंचपट्टाद्यैर्नेत्रपट्टैःकृतैरपि ॥ ५२ ॥ तत्सर्वैस्थगितंव
स्त्रैःपट्टैःपट्टालिकैःशुभैः ॥ मुक्ताफलैस्तथानेकैर्मणिभिश्चोपशोभितं ॥ ५३ ॥ हयौचरुचिरैर्वस्त्रैर्भूषितावत्यलंकृतैः ॥ तौभूषणैरलंकृत्यमुखयंत्रा
भिशोभितौ ॥ ५४ ॥ सपर्याणौकशायुक्तौग्रीवाभरणभूषितौ ॥ शुभलक्षणसंयुक्तौतरुणौतत्रयोजयेत् ॥ ५५ ॥ रविसोमग्रहेदद्या
च्छुभेवान्यत्रपर्वणि ॥ प्रदद्याद्योद्विजाग्र्यायसप्राप्नोत्यर्कलोकताम् ॥ ५६ ॥ वसेद्रविसमस्तत्रसेव्यमानःसुदेवतैः ॥ एकंवापिहयंद
त्वासर्वालंकारभूषितम् ॥ सुलक्षणंयुवानंचसोश्वलोकमवाप्नुयात् ॥ ५७ ॥ प्रदद्याद्योरथंरम्यंहेमरत्नाविभूषितम् ॥ दिव्यवस्त्रपरिच्छ
न्नंनेत्रपट्टादिभिःशुभैः ॥ ५८ ॥ सौवर्णैरर्धचंद्रैश्चराजतैर्वापिभूषितम् ॥ शुभैर्मुक्ताफलैरम्यैर्नीलवज्रादिभिस्तथा ॥ ५९ ॥ गजौसुलक्षणो
पेतौसुशीलौनिरुजावपि ॥ शुभदंतौसुरूपौचहेमालंकारधारिणौ ॥ १६० ॥ दिव्यवस्त्रैःपरिच्छन्नौकर्णशंखावलंवितौ ॥ पट्टने

त्रादिकक्षौतौविशिष्टमणिमंडितौ ॥ ६१ ॥ ईदृग्रथंचसंयुज्यपताकादिविभूषितम् ॥ शोभितंपुष्पमालाभिःशंखदुंदुभिनिःस्वनैः ॥
॥ ६२ ॥ चतुर्वेदायविप्रायत्रिवेदायाथवापुनः ॥ शुचयेवाद्विवेदायश्रोत्रियायकृतेष्टये ॥ ६३ ॥ अलंकृत्यसमालभ्यपरिधाप्यंसुवा
सर्सी ॥ तस्यहस्तोदकंदद्यात्प्रीयतांकेशवस्त्विति ॥ ६४ ॥ एवंहस्तिरथंदद्यात्समभ्यर्च्यद्विजातये ॥ निहत्यसर्वपापानिविष्णुलोकं
सगच्छति ॥ ६५ ॥ वसेच्चतुर्भुजस्तत्रसेव्यमानश्चतुर्भुजैः ॥ अनंतंकालंमातिष्ठेच्छंखचक्रगदाधरः ॥ ६६ ॥ पश्यंतिसरथंयेतुदी
यमानंनराद्विजाः ॥ तेपिविष्णुपुरंयांतिवासिष्ठजवचोयथा ॥ ६७ ॥ एकंवापिहियोदद्याद्धस्तिनंसविभूषणम् ॥ सवस्त्रंहेमरदनंनरवैर
जतकल्पितैः ॥ ६८ ॥ मणिमुक्ताफलैर्युक्तंसुवर्णरजतान्वितम् ॥ पूर्वोक्तायतुविप्रायचतुर्वेदायवाद्विजाः ॥ ६९ ॥ योदद्याद्विधिवत्सोपि
सदाविष्णुपुरंवयेत् ॥ विधिवद्यश्चगृह्णातिसर्वमेवप्रतिग्रहम् ॥ १७० ॥ दातृलोकमवाप्नोतिपराशरवचोयथा ॥ अलंकृत्यतुयःकन्यांब्राह्मोद्वा
हेनयच्छति ॥ ७१ ॥ अन्योद्वाहेनकेनापिगजदानशतंलभेत् ॥ गजदानस्ययत्पुण्यंतस्माच्छतगुणंफलम् ॥ ७२ ॥ कन्यादाविधिव
त्सर्वप्राप्नुवंतिनसंशयम् ॥ पुत्रदानंचवांच्छंतिकेचिद्वत्समनीषिणः ॥ कन्यादानात्परंब्रूयुःपुत्रदानंशतोत्तरम् ॥ ७३ ॥ भूमिंसस्यवतीं
दद्याद्यस्तुविप्रायमानवः ॥ समूलशूकतुल्यानिविष्णुलोकेसदावसेत् ॥ ७४ ॥ दशहस्तैर्भवेद्वंशश्चतुर्भिस्तैस्तुविस्तरे ॥ दैर्घ्येपिदंशभिर्व
शैर्गोचर्मपरिकीर्तितम् ॥ ७५ ॥ अपिगोचर्ममात्रेणभूमिंदद्याद्विजातये ॥ विष्णुलोकमवाप्नोतिकेचिदाहुर्मनीषिणः ॥ ७६ ॥ षड्भि
स्तुसहितान्विप्रवंशानुभयतोदश ॥ तानेवद्विगुणानाहुरितिकेचिन्निवर्तनम् ॥ ७७ ॥ दंडानांपंचहस्तानांचत्वारिंशद्दशाहता ॥ पं
चभिर्गुणितातासामुक्तैरप्युक्तंनिवर्तनम् ॥ ७८ ॥ ॥ बालवत्सकधेनूनांसहस्रंयत्रतिष्ठति ॥ भूद्दानिवर्तनंप्राहुरितिकेचिन्मनीषिणः ॥

वृ. पा. ॥ ७९ ॥ ताम्रपत्रेपिपट्टेवालेखयित्वाचशासनम् ॥ ग्रामंविप्रायायोदद्याद्दशग्रामीराशिर्निपुनः ॥ १८० ॥ सीरस्यैकस्यवादद्यात्तस्य अ०
॥८७॥ पुण्यंकिमुच्यते ॥ भूपांसुकणिकातुल्याःसमाविष्णुपुरेवसेत् ॥ ८१ ॥ भूमिदानात्परोधर्मस्त्रैलोक्येपिनविद्यते ॥ पादैकमात्रदानेनत-
स्यापिविष्णुपुरेस्थितिः ॥ ८२ ॥ तस्यदानात्परोधर्मस्तद्धृतेःपातकंपरम् ॥ तस्मात्तांयत्नतोदद्याद्धरणंचाविवर्जयेत् ॥ ८३ ॥ इदंवभूमिदा ८
नस्यप्रत्यक्षंचिह्नमीक्ष्यते ॥ क्षितिदःस्वर्गतोभ्रष्टःक्षितिनाथःपुनर्भवेत् ॥ ८४ ॥ भुनक्तिचपुनर्भोगान्यथापूर्वंदिवितथाभुवि ॥ गजैरश्वैर्न
रैर्युक्तोहेमरत्नविभूषितः ॥ ८५ ॥ वारस्त्रीगणसंसेव्यःस्तूयमानश्चवंदिभिः ॥ छत्रालंकारसंयुक्तोगीतवाद्योत्सवादिभिः ॥ ८६ ॥ इत्या
दिभूमिदानस्यचिह्नंतेवत्सकीर्तितम् ॥ वित्तेनापिहियःक्रीत्वाभूमिंविप्रायायच्छति ॥ ८७ ॥ यावत्तिष्ठतिसाभूमिःसस्वर्गेतावदेधते ॥
गृहभूमिंचयोदद्याद्दद्याच्छयनपात्रकम् ॥ गृहोपकरणंदद्याद्गृहदानफलंलभेत् ॥ ८८ ॥ हस्तमात्रांचयोदद्याद्भूमिंविप्रायमानवः ॥ तस्या
पिहिमहापुण्यंदद्यादंगुलमात्रकम् ॥ ८९ ॥ नतस्मात्परमंदानंकिंचिदस्तिधरातले ॥ पुण्यंफलंप्रवक्ष्यामिविशेषेणतुतच्छृणु ॥ १९० ॥
यत्रहेमघनिसद्मानिमणिभिर्भूषितानिच ॥ प्राकारायत्रसौवर्णाश्चतुर्द्वाराःसतोरणाः ॥ ९१ ॥ विद्याअप्सरसोयत्रतासांसंवासस्त्वनेकशः ॥
याहृष्ट्वाकामदेवोपिभवेत्कामातुरःक्षणात् ॥ ९२ ॥ सुकेशाःसुललाटाश्चबालचंद्रोपमभ्रुवः ॥ सुनासाकर्णगंडाश्चबिंबोष्ठाधरपल्लवाः ॥
॥ ९३ ॥ सुग्रीवभुजपाण्यग्राःपीनोत्तुंगपयोधराः ॥ सुमध्योरुनितंबाश्चसुश्रोण्यश्चशुभोरसः ॥ ९४ ॥ सुजानुजंघगुल्फाश्चसुपादाःसुन
खास्तथा ॥ केनरूपेणतावण्याभवंत्यप्सरसोद्विजः ॥ ९५ ॥ वैष्णवागणिकाःसर्वादिव्यस्रग्वस्त्रभूषणाः ॥ दिव्यानुलेपलिप्तांगादिव्याल ॥८७॥
कारभूषिताः ॥ ९६ ॥ मुनीनामपिचेतांसियाःदृष्ट्वाचुक्षुभुःक्षणात् ॥ वर्ण्यंतेताःकथंदेव्योयालक्ष्मीप्रतिमोपमाः ॥ ९७ ॥ वैष्णवाप्सरसां

संघैर्वृतश्चामरधारिभिः ॥ गीयमानश्च गंधर्वैः स्तूयमानः सदैक्तैः ॥ १८ ॥ वसेद्विष्णुपुरे तावद्यावद्भायुर्वेहेत्क्षितौ ॥ पुण्यं च भूमिदानस्य क
थितं तव वत्सक ॥ १९ ॥ मेरुर्धरित्रीकुलपर्वताश्च पाथोर्णवः स्वर्गतलावधीनि ॥ दानानि सर्वाण्यपि भोगकामैः प्रोक्तानि देयानि पुराणविद्भिः ॥
॥ २०० ॥ आत्मतुल्यं सुवर्णयो रजतं द्रव्यमेव च ॥ प्रयच्छति द्विजाग्र्येभ्यस्तस्याप्येतत्फलं भवेत् ॥ १ ॥ ब्रह्महत्यादिभिः पापैर्यदि युक्तो
भवेन्नरः ॥ स तैः पापैर्विनिर्मुक्तः प्रोक्तो विष्णुपुरं वसेत् ॥ २ ॥ तुलापुरुषभूमौ च दीयमाने च येन रा ॥ पश्यंति ते ते पितरं यांति येपि स्युरनुमो
दकाः ॥ ३ ॥ गुडं दाय दिवा खंडं लवणं वापि तोलितम् ॥ यो दद्यात्स्वात्मना तुल्यं नारी वा पुरुषोपि वा ॥ ४ ॥ पुमान्प्रद्युम्नवत्सस्यान्नारी स्या
त्तु रतेः समाः ॥ सुभगे रूपसंपन्ने भुंजातां तौ त्रिविष्टपम् ॥ ५ ॥ हिरण्यं दक्षिणायुक्तं सवस्त्रं भूषणान्वितम् ॥ अलंकृत्य द्विजाग्र्यं तं परिधाप्य च
वाससी ॥ ६ ॥ खंडादि तोलितं सर्वं विप्रेभ्यः प्रतिपादयेत् ॥ सर्वकामसमृद्धात्मा चिरकालं वसेद्दिवि ॥ ७ ॥ उष्ट्रं खरांश्चोष्ट्रांसहिषं च मेषमश्वं क
रेणुं महिषीं गजं च ॥ ब्रूयुः खरोष्ट्रास्त्विकमेव संतो हेमादि युक्तं सकलं प्रदेयम् ॥ ८ ॥ वराणि रत्नानि च हेमरूप्ये शुभानि वासांसि च ताम्रकांस्ये ॥
उपाधिमात्रं करभादि कृत्वा हेमादि दानं द्विजपुंगवेभ्यः ॥ ९ ॥ वदंति केचिद्रतानि कृत्वा हेममयान्यपि ॥ सर्वोपहारयुक्तानि देयानि हेमधेनुवत् ॥
॥ २१० ॥ अर्चयित्वा हृषीकेशं पुण्येह्नि विधिपूर्वकम् ॥ अग्निशुद्धं सुवर्णं च विप्रायाहूय यच्छति ॥ ११ ॥ सुमुक्त्वा विष्णुलोकं तु यदा गच्छति संसृतौ ॥
तदासौ तेन पुण्येन धनयुक्तो भवेज्जनः ॥ १२ ॥ यो रूप्यमुत्तमं दद्यादर्थिने ब्राह्मणाय च ॥ सोनीव धनसंयुक्तो रूपयुक्तः प्रजायते ॥ १३ ॥ नाणकानि
विचित्राणि नानानामांनि यो नरः ॥ तथा ताम्रं च कांस्यं च त्रपु वा सीसकादि वा ॥ १४ ॥ यो दद्याद्भक्तितोर्थिभ्यः सोमलोकमवाप्नुयात् ॥ स संभुज्य तु तं
लोकं रूपवानिह जायते ॥ १५ ॥ घृतदानानि यो विप्रे सोत्यंतं सुखमेधते ॥ भोजनाभ्यंजनार्थं च भवेत्सोपि सुखी नरः ॥ १६ ॥ सततं तैलदानेन भोज

नाभ्यंजनायच॥स्निग्धदेहोप्रतितेजस्वीरूपयुक्तःप्रजायते॥१७॥मृगनाभिंचकर्पूरंतगरंचंदनादिकम् ॥गंधद्रव्याणियोदद्याद्धनीभोगीसजायते ॥१८॥ तांबूलंपुष्पमालांचपुष्पाण्याभरणानिच ॥ योदद्याद्रूपवान्भोगीधनयुक्तश्चजायते ॥१९॥शिशिरर्तौचयोदद्यादनलंसेंधनंनरः ॥ स समिद्धोदराग्निःसन्प्रजारूपयुतोभवेत् ॥ २२० ॥ योदद्याद्दुर्लभानांचनित्यमेधांसिमानवः ॥ श्रियायुक्तोभवेदत्रसांपरायेपरांजितः ॥ ॥ २१ ॥ अथकिंबहुनोक्तेनदानधर्मविवेचने ॥ यद्यदिष्टतमंलोकेतदेवप्रतिपादयेत् ॥ २२ ॥ तिलान्दर्भांश्चनित्यार्थंतृणान्यास्तरणानिच ॥ सोपिभुक्त्वासुखंस्वर्गेजातश्चात्रधनीसुखी ॥ २३ ॥ गुडमिक्षुरसंखंडंदुग्धंखर्जूरखाद्यकान् ॥ दत्वाफलानिसर्वाणिस्वादूनिमधुराणिच ॥ २४ ॥ रम्याणिसर्वशाकानिसहिंगुलवणानिच ॥ स्थाल्यादिगृहपात्रंचदत्वागोत्राधिकोभवेत् ॥ २५ ॥ कूष्मांडंत्रपुसंदत्वावृंताकंचपटोलकम् ॥ शुभानिकंदमूलानिसुहृदःपुत्रवान्सुखी ॥ २६ ॥ बदराम्लंकपित्थानिखर्जूरंदाडिमानिच ॥ चारींश्चामलकान्दत्वापुत्रवानिहजायते ॥ २७ ॥ याचनारीमहाभक्त्यादद्यादेतानिवाडवे ॥ सुपुत्रासुभगाहृष्टापार्वतीविहजायते ॥ २८ ॥ योर्थिने तृणकाष्ठानिब्राह्मणायोपपादयेत् ॥ सर्वदत्तंभवेत्तस्यधेनुदानसमंफलम् ॥ २९ ॥ भोजनाच्छादनेदत्वादत्वाचोपानहौद्विजे ॥ सर्वलोकंसमंभुज्यपूर्णकामोत्रजायते ॥ २३० ॥ याःपुण्यनःयोंतिसकामपुंसांकामोपभुक्त्यैनिजदत्तदेहाः ॥ गीर्वाणचेतोहररूपवंत्यःपौरंदरास्तागणिकाभवंति ॥ ३१ ॥ गृहंवामठकंवापिशयनासनविष्टरम् ॥ दत्वाचकशिपुंविद्वन्योविप्रान्पाठयेन्नरः ॥ ३२ ॥ महीदानादिकंव्यासविद्यादानंशताधिकम् ॥ विद्यार्थिनांचविप्राणांपादाभ्यंगमुपानहौ ॥ ३३ ॥ योददातिद्विजश्रेष्ठंब्रह्मलोकंसगच्छति ॥ आदावारभ्यवेदंवाशास्त्रंवान्यतमंद्विजः ॥ अध्यापयेद्द्विजाञ्छिष्यान्विद्यादानंतदुच्यते ॥ ३४ ॥ उपाध्यायंनिधायाग्रेयस्यकृत्वाचवर्तनम् ॥ भ

त्त्याविद्वान्स्वप्रच्छेद्यःपरंब्रह्ममृतोविशेत् ॥ ३५ ॥ विद्यार्थिनेचविप्राययोदद्याद्भोजनंनरः ॥ पादाभ्यंगंतथास्नानंसोपिविद्यांशभाक्भवेत् ॥
॥ ३६ ॥ यःस्कंधंपाठयेद्विद्वान्स्नात्वाभक्त्याचसद्विजाः ॥ सब्रह्मसाक्षादभ्येतिभूयोनायातिसंसृतौ ॥ ३७ ॥ ऋचंवायदिवार्धंचपादंचैवा
द्विजोत्तमः ॥ अध्यापयतितस्यातिनास्तिशिष्यस्यनिष्कृतिः ॥ ३८ ॥ मंत्ररूपंचयोदद्यादेकंवापिशुभाक्षरम् ॥ तस्यदानस्यवैशिष्यो
निष्क्रांतंकर्तुमक्षमः ॥ ३९ ॥ यद्विप्रशिष्यप्रतिपादितेनविद्याप्रदानेननतुल्यमस्ति ॥ दानंधरित्र्यामविनाशिकिंचित्तस्मात्प्रदेयंससतं
तदेव ॥ २४० ॥ रोगार्तस्यौषधंपथ्यंयोददातिनरोयदि ॥ अन्यस्यापिचकन्यापिंप्राणदःसतुनिश्चितम् ॥ ४१ ॥ किंवित्तैर्भूषणैर्वस्त्रैरत्नैर्गो
भिस्तुरंगमैः ॥ आदत्तैःप्राणहीनेनप्राणदानंततोधिकम् ॥ ४२ ॥ अन्नंप्राणाजलंप्राणाप्राणाश्चौषधमुच्यते ॥ तस्मादौषधदानेन
दत्तास्युरसवोद्विजाः ॥ ४३ ॥ प्राणदानंचयोदद्यात्सर्वेषामपिदेहिनाम् ॥ सयातिपरमंस्थानंयत्रदेवश्चतुर्भुजः ॥ ४४ ॥ योदद्या
न्मधुरांवाचंमाश्वासनकरामृताम् ॥ भयरोगादिनार्तस्यसगोमेधफलंलभेत् ॥ ४५ ॥ क्लीबांधबधिरादीनांरोगार्तकुशरीरिणाम् ॥
तेषांयद्दीयतेदानंदयादानंतदुच्यते ॥ ४६ ॥ येयच्छंतिदयादानंसानुकंपेनचेतसा ॥ तेपितद्दानधर्मेणविष्णुलोकमाप्नुयुः ॥ ४७ ॥
अथान्यत्संप्रवक्ष्यामितिथिमासगतंद्विजाः ॥ यत्प्रदानेमुनिश्रेष्ठविशिष्टंजायतेफलम् ॥ ४८ ॥ मासेमार्गशिरेदानंपूर्णचंद्रेतिथौ
द्विजाः ॥ विधिनातत्प्रवक्ष्यामियत्प्रदानंमहाफलम् ॥ ४९ ॥ अक्लिष्टंकांस्यपात्रंचलवणप्रस्थपूरितम् ॥ हिरण्यनाभवस्त्रेणकौ
सुंभेनवुवेष्टितम् ॥ २५० ॥ स्नातःस्नातायविप्रायसवस्त्रंप्रतिपाद्यच ॥ सौभाग्यरूपलावण्ययुक्तोभवतिमानवः ॥ ५१ ॥ गौरसर्षपकल्केन
पौष्यामुत्सारितोनरः ॥ सपुनरभिषेक्तव्यःकुंभेनगव्यसर्पिषा ॥ ५२ ॥ सर्वगंधौषधैस्तोयैःफलपुष्पसमन्वितैः ॥ ससुवर्णमुखंदत्त्वाप्रदद्या

त्तद्द्विजन्मने ॥ ५३ ॥ घृतेनस्नापयेद्विष्णुंभक्त्याचैवप्रपूजयेत् ॥ घृतंचजुहुयादग्नौघृतंदद्याद्द्विजातये ॥ ५४ ॥ छत्रंवस्त्रयुगंदद्यात्सो
पवासःसमाहितः ॥ कर्मणातेनधर्मज्ञःपुष्टिमाप्नोत्यनुत्तमाम् ॥ ५५ ॥ माघ्यांकुम्भस्तिलैःश्राद्धैर्मुच्यतेसर्वपातकैः ॥ शुभंशयनमास्तीर्य
फाल्गुण्यांसद्द्विजातये ॥ ५६ ॥ रूपद्रविणसंयुक्तांभार्यांरूपवतींलभेत् ॥ नरःप्राप्नोतिधर्मज्ञःप्रमाणंराजवेश्मनि ॥ ५७ ॥ नारीच
शुभभर्तारंरूपसौभाग्यसंयुतम् ॥ प्राप्नोतिविपुलान्भोगान्नात्रकार्याविचारणा ॥ ५८ ॥ पौर्णमासीषुसर्वासुमासर्क्षयुतासुच ॥ एतेषा
मेवदानानांफलंदशगुणंलभेत् ॥ ५९ ॥ महापूर्वासुचैतासुफलमक्षय्यमश्नुते ॥ द्वादश्यांशुक्लपक्षस्यचैत्रेवस्त्रप्रदोनरः ॥ २६० ॥
अक्षयाँल्लभतेभोगान्नाकलोकेविनश्वरे ॥ इत्येतत्कथितंविप्राफलंचैतस्यसत्तमाः ॥ ६१ ॥ योदद्याद्धर्मवैशाखेवंचकेद्वादशीदिने ॥
शुक्लायांपादुकाच्छत्रेविष्णुलोकमवाप्नुयात् ॥ ६२ ॥ आस्तीर्यशयनंदद्यात्प्रीतयेशेषशायिनः ॥ आषाढेशुक्लद्वादश्यांश्वेतद्वीपाधिपो
भवेत् ॥ ६३ ॥ श्रवणेवस्त्रदानेनविष्णुसायुज्यमृच्छति ॥ गोप्रदोयातिगोलोकंमासिभाद्रपदेद्विजाः ॥ ६४ ॥ प्रीणयेदश्वशिरसमश्वं
दत्वातथाश्विने ॥ कुलत्रयंसमुद्धृत्यविष्णुलोकमवाप्नुयात् ॥ ६५ ॥ कंबलस्यप्रदानेनकार्तिक्यांभोगमाप्नुयात् ॥ प्रदानंलवणानांतुमा
र्गशीर्षेमहाफलम् ॥ ६६ ॥ धान्यानांचतथापौषेदारूणामप्यनंतरम् ॥ फाल्गुनेसर्वगंधानांभवेद्दानंसुखप्रदम् ॥ ६७ ॥ भगर्क्षसंयुताचै
त्रेद्वादशीतुमहाफला ॥ मासेतुमाधवेशुक्लेद्वादशीकरसंयुता ॥ ६८ ॥ वायव्येनयुताशुक्लेशुचौमूलेनवैष्णवी ॥ नभस्याश्विनयोःपुण्या
श्रवणाजर्क्षसंयुता ॥ ६९ ॥ पौष्णर्क्षसंयुताचोर्जेमार्गेचकृत्तिकान्विता ॥ सहस्येग्निभसंयुक्तातपस्यादित्यभान्विता ॥ २७० ॥ तपस्ये
गुर्वृक्षयुक्ताद्वादशीपावनास्मृता ॥ नक्षत्रयुक्तास्वेतासुदत्तंदानाद्यनंतकम् ॥ ७१ ॥ मेषंचमेषसंक्रांतौगोवृषौवृषसंक्रमे ॥ शयनासनदा

नंचमिथुनोपगमेतथा ॥ ७२ ॥ सक्तून्कर्कप्रवेशेचप्रदद्याच्छर्करांशुभाम् ॥ सिंहराशौचपात्राणांतैजसानांप्रदायकः ॥ ७३ ॥ क
न्याप्रवेशेवस्त्राणांसुरभीणांपयःस्तुतम् ॥ तुलाप्रवेशेधान्यानांबीजानामपिचोत्तमम् ॥ ७४ ॥ वृश्चिकेचगुवस्त्राणांवेश्मनांदानमुत्तमम् ॥
धनुःप्रवेशेशस्त्राणांयानानामपिपुण्यदम् ॥ ७५ ॥ झषराशौचदारूणांदानमग्नेःसुखप्रदम् ॥ कुंभप्रवेशेदानंतुगवामर्थंतृणस्यच ॥
॥ ७६ ॥ मीनप्रवेशेम्लानानांमाल्यनामपिचोत्तमम् ॥ स्नानान्यथैतानिमया द्विजेंद्राःप्रोक्तानिकालेषुमुनिप्रदाय ॥ प्राप्नोतिकामान्मन
सावेमृष्टांस्तस्मात्प्रशंसंतिहकालदानम् ॥ ७७ ॥ अशौचेमृतकेचैवनदेयं प्रतिग्रहः ॥ सतोरपितयोर्देयासद्यश्चाभयदक्षिणा ॥ ७८ ॥
सत्रेदानंनदातव्यंदातव्यमभयंसदा ॥ इमानित्रीणिदेयानिविद्याकन्याप्रतिग्रहः ॥ ७९ ॥ देवानामतिथीनांचकायामपिचपूजनम् ॥ अभ
यस्यदानकालोयदाभयमुपस्थितम् ॥ ८० ॥ अन्येप्रतिग्रहाविप्रग्राह्यास्तेशुचिभिर्द्विजैः ॥ अशौचेमृतकेवापिनचग्राह्याभवंतिते ॥
॥ ८१ ॥ अभक्तोनचयर्मस्नस्तथामुक्तशिखोपिन ॥ स्नात्वासम्यगुपस्पृश्यगृह्णीतप्रयतःशुचिः ॥ ८२ ॥ द्रव्यस्यनामगृह्णीयातदात
थानिवेदयेत् ॥ तोयंदद्यात्तथादातादानविधिरयंस्मृतः ॥ ८३ ॥ प्रतिग्रहीतासावित्रंसर्वमंत्रमुदीरयेत् ॥ सार्धद्रव्येणतत्सर्वंतद्द्रव्यंचसदे
वहि ॥ ८४ ॥ समापयेत्ततः पश्चात्कामंस्तुत्वाप्रतिग्रहम् ॥ प्रतिग्रहपठेदुच्चैः प्रतिगृह्यद्विजोत्तमात् ॥ ८५ ॥ मंदंपठेद्धिराजन्यादुपांशुच
तथाविशः ॥ मनसाचतथाशूद्रात्कर्तव्यंस्वस्तिवाचनम् ॥ ८६ ॥ सोंकारंब्राह्मणान्ब्रूयान्निरोंकारंमहीपतौ ॥ उपांशुन्वतथावैश्येशूद्रेस्वातिष
चोहितम् ॥ ८७ ॥ नदानंयशसेदद्यान्नभयान्नोपकारिणे ॥ ननृत्यगीतशीलेभ्योहासकेभ्यश्चधार्मिकः ॥ ८८ ॥ पात्रभूतोपि योविप्रःप्रति
गृह्यप्रतिग्रहम् ॥ असत्सुविनियुंजीततस्मैदेयंनतद्भवेत् ॥ ८९ ॥ संचयंकुरुतेयस्तुसमादायततस्ततः ॥ धर्मार्थंनोपभुंजीतनतंतस्करमर्प

येत् ॥ २९० ॥ यस्मैदित्साद्द्विजायस्यादुरीकृत्यतंनरः ॥ दानंचह्रदिसंचित्यजलमध्येजलंक्षिपेत् ॥ ९१ ॥ वदंतिमुनयोगाथांपरोक्षंदान
सत्फलम् ॥ परोक्षमक्षयंदानंप्रत्यक्षात्कोटिशोभवेत् ॥९२॥ पात्रंमनसिसंचित्यगुणंक्त्वंतदभीप्सितम् ॥ अप्सुत्राह्मणहस्तेवाभूमौवापिजलंक्षि
पेत ॥९३॥ दानकालेचसंप्राप्तेपात्रेचासान्निधौजलम् ॥ अन्यविप्रकरेदत्वादानंपात्रायदीयते॥ ९४ ॥विष्णुर्भूर्वरुणोयत्रगृह्णंतीहकरोदकम् ॥
तद्दानंब्रह्मसंप्राप्तमक्षय्यमितिविष्णुगीः ॥ ९५ ॥ लक्ष्मीभ्रष्टाययद्दत्तंदरिद्रायार्थिनेद्विजाः ॥ तदक्षय्यंसमुद्दिष्टमितिपराशरोवदत् ॥ ९६॥
राज्यभ्रष्टंतुराजानंभूयोराज्येनिवेदयेत् ॥ विष्णुलोकेचिरंभुक्त्वाभूयोभूमिपतिर्भवेत् ॥ ९७ ॥ प्रतिश्रुत्यद्विजायार्थंयोनयच्छतितंपु
नः ॥ नस्मारयतिविप्रोपितुल्यंस्यादुपपातकम् ॥ ९८ ॥ प्रतिश्रुत्यचयत्किंचिद्द्विजेभ्योनप्रयच्छति ॥ सर्वद्वादशजन्मानिसृगालयो
निमाप्नुयात् ॥ ९९ ॥ गृष्टचा दीनथवक्ष्यामियथालक्षणलक्षितान् ॥ मानंभूमितिलादीनांयथावत्तान्निबोधत ॥ ३०० ॥ अजा
तदंतायातुस्याद्गर्भदंतसमन्विता ॥ वर्षादर्वाक्चतुर्थाच्चवशिकेति निगद्यते ॥ १ ॥ सुशीलाचसुवर्णाचनीरोगाचपयस्विनी ॥ सव
त्साप्रथमंसूतागृष्टिर्गौरभिधीयते ॥ २ ॥ अरोगायापरिक्लिष्टाप्रसवत्यवसूतिका ॥ सूतासतीपयोयुक्तासागौर्भूमिसमामता ॥ ३ ॥
पूर्वोक्तगुणसंयुक्ताप्रत्यक्षप्रसवातथा ॥ साचगौर्धेनुरित्युक्तावसिष्ठवचोयथा ॥ ४ ॥ पंचगुंजाभवेन्माषः कर्षःषोडशभिश्चतैः ॥ तैश्च
तुर्भिःपलंप्रोक्तंतौल्यमानंपुरातनैः ॥ ५ ॥ भद्रंनरैकहस्ताभिः प्रसृतिभिश्चतसृभिः ॥ मानकेतैश्चतुर्भिश्चसेतिकेतिविगीयते ॥
॥ ६ ॥ ताभिश्चतसृभिःप्रस्थश्चतुर्भिराढकस्तथा ॥ द्रोणैश्चतुर्भिस्तैरक्तोधान्यमानंमितिस्मृतम् ॥ ७ ॥ तिलप्रसृतिभिर्भांडंचतुर्भि
र्यत्प्रपूर्यते ॥ तैश्चतुर्भिश्चकर्षश्चतैश्चतुर्भिश्चवैमलम् ॥ ८ ॥ परेदंतैश्चतुर्भिःस्यात् श्रापाटीतच्चतुष्टयम् ॥ करटंतिसृभिस्ताभिश्चतुर्भि

स्तैर्घटः स्मृतः ॥ ९ ॥ किंचैवंबहुनोक्तेनदानस्यतुपुनःपुनः ॥ दीयतेयद्दरिद्रायदक्षय्यंकुटुंबिने ॥ ३१० ॥ अथान्यत्संप्रवक्ष्यामि
दानानिनिष्फलानिच ॥ तथानिष्फलजन्मानियथावृत्तंनिबोधत ॥ ११ ॥ वृथाजन्मानिचत्वारिवृथादानानिषोडश ॥ तानिपृथक्प्रवक्ष्या
मिनिबोधध्वंद्विजोत्तमाः ॥ १२ ॥ अपुत्रस्यवृथाजन्मयेचधर्मबहिष्कृताः ॥ दरिद्रस्यवृथाजन्मव्याधितस्यापिनिष्फलम् ॥ १३ ॥
पण्यस्थानेषुयद्दत्तंवृथादानंतदुच्यते ॥ आरूढपतितेचैवअन्यायोपार्जितंचयत् ॥ १४ ॥ व्यर्थमब्राह्मणेदानंपतितेतस्करेपिच ॥
गुरोरप्रीतिजनकेकृतघ्नेग्रामयाचके ॥ १५ ॥ ब्रह्मबंधौचयद्दत्तंयद्दत्तंवृषलीपतौ ॥ वेदविक्रयिणेचैवयस्यचोपपतिर्गृहे ॥ १६ ॥ स्त्रीजिते
चैवयद्दत्तंव्यालग्राहेपिनिष्फलम् ॥ परचारकेपियद्दत्तंवृथादानानिषोडश ॥ १७ ॥ तमोवृत्तंचयोदद्याद्भयात्क्रोधाच्चमानवः ॥ विप्रोदानंहि
तत्सर्वंभुंक्तेगर्भस्थएवहि ॥ १८ ॥ ईर्ष्ययामन्युनादानंयद्दानमर्थकारणात् ॥ योददातिद्विजातिभ्योबालभावेतदश्नुते ॥ १९ ॥ स्वयंनी
त्वाचयद्दानंभक्त्यापात्रेप्रदीयते ॥ अप्रमेयगुणंतत्स्यादुपतिष्ठतियौवने ॥ ३२० ॥ यत्तद्विप्रायवृद्धायभक्त्याप्रमरयाम्वसु ॥ दीयतेवेदविदु
षेउपतिष्ठतिवार्धके ॥ २१ ॥ तस्मात्सर्वास्ववस्थासुसर्वदानानिसत्तमाः ॥ दातव्यानिद्विजातिभ्यःस्वर्गमार्गमभीप्सता ॥ २२ ॥ भूमेःप्र
तिग्रहंकुर्याद्भूमिंकृत्वाप्रदक्षिणम् ॥ करेकृत्यतथाकन्यांदासीदासावपिद्विजाः ॥ २३ ॥ करंतुहृदिविन्यस्यधर्मोज्ञेयःप्रतिग्रहः ॥ आरुह्य
स्वगजस्योक्तःकर्णेश्वस्यसटासुवा ॥ २४ ॥ तथाचैकशफानांतुसर्वेषामविशेषतः ॥ प्रतिग्रहीतागांशृङ्गेपुच्छेकृष्णाजिनंतथा ॥ २५ ॥
कर्णेजाःपशवःसर्वेग्राह्यापुच्छेविचक्षणैः ॥ प्रतिग्रहमथोष्ट्रस्यसमारुह्यचपादुके ॥ २६ ॥ ईषायांतुरथोक्षेवाछत्रंदंडेप्रदीयते ॥ द्रुमाणामथ
सर्वेषांमूलेन्यस्तकरोभवेत् ॥ २७ ॥ आयुधानिसमादायतथामुच्यविभूषणम् ॥ धर्मध्वजोद्विजःस्पृष्ट्वाप्रविश्यचतथागृहम् ॥ २८ ॥ अक

तीर्थंचसर्वाणिजलस्थानानिचैवहि ॥ उपवेश्यचशय्यायांस्पर्शयित्वाकरेणवा ॥ २९॥ द्रव्याण्यन्यान्यथादायस्पृष्ट्वावाब्राह्मणःपठेत् ॥
कन्यादानेतुनपठेन्नद्रव्याणिपृथक्पृथक् ॥ ३३० ॥ प्रतिग्रहंद्विजश्रेष्ठतत्रैवांतर्भवंतिते ॥ द्रव्याणामथसर्वेषांद्रव्यसंश्रयणान्नरः ॥ ३१ ॥
वाचयेज्जलमादायओंकारेणप्रतिग्रहम् ॥ प्रतिग्रहस्ययोधर्मंनजानातिविधिंद्विजाः ॥ सद्रव्यस्तेयसंयुक्तोनरकंप्रतिपद्यते ॥ ३२ ॥ अथा
पिवक्ष्यामिविधिंविशेषान्वाजिप्रदानेचप्रतिग्रहेच ॥ दातृग्रहीत्रोरपियेनपुण्यंस्वर्गायजायेतशृणुध्वमेतत् ॥ ३३ ॥ गृह्णातियोश्वंविधिवद्द्वि
जेंद्रःकुर्यादसौपंचदिनानिपूर्वम् ॥ पंचोपचारैर्युतविष्णुपूजांकूष्मांडमंत्रैर्घृतदुग्धहोमम् ॥ ३४ ॥ यद्वाम्रहत्यादिमस्त्वतीयंसोंकारभूरादि
भिरान्वितंच ॥ प्रत्येकमष्टौजुहुयाद्द्विजेंद्रःसूर्येणमंत्रेणचतद्ददष्टौ ॥ ३५ ॥ षष्ठ्याप्रयुक्तंत्रिशतंजुहोतिकुर्याच्चगायत्रिजपंसहस्रम् ॥ पश्चात्प्र
गृह्णंस्तुरगंद्विजाग्र्यस्तथास्वमात्मानमजंनयेत ॥ ३६ ॥ दातापिचैवंव्रतमादिदध्याद्द्विजाग्र्यवत्प्राक्तनपापशुद्ध्यै ॥ द्वावप्यमूसूर्यजनंलभे
तेसर्वत्रपूज्यौद्विजवृंदमध्ये ॥ ३७ ॥ ॥ इतिअश्वप्रतिग्रहविधिः ॥ ॥ जानातियोश्वस्यप्रतिग्रहंचपुराणगीतास्तुभवंतिगाथाः ॥
विशेषपुण्यप्रतिपादनायतिथौप्रदत्तंद्विजयत्रयत्र ॥ ३८ ॥ श्रावणेशुक्लपक्षेतुद्वादश्यांप्रीयतेहरेः ॥ गोप्रदानेनविप्रेंद्रवदंत्येतन्मनीषिणः ॥ ३९ ॥
पुष्येशुक्लेद्विजश्रेष्ठाद्वादश्यांघृतधेनुका ॥ घृतार्चिःप्रीणनाज्ञालंप्रदद्यात्फलदायिनी ॥ ३४० ॥ माघशुक्लद्वादशीमायेतिलगौस्तत्रदीयते ॥
केशवप्रीणनार्थायसर्वकामफलप्रदा ॥ ४१ ॥ ज्येष्ठमासेसितेपक्षेद्वादश्यांजलधेनुकाम् ॥ दत्वाविप्रायविधिनाप्रीत्यर्थंत्वंबुशायिनः ॥ ४२ ॥
यत्रवातत्रवाकालेयद्वातद्वाप्रदीयते ॥ विशेषार्थमिदंप्रोक्तंनान्यकालनिषेधकम् ॥ ४३ ॥ विष्णुमुद्दिश्यविप्रेभ्योनिःस्वेभ्योयत्प्रदीयते ॥
भवेत्तदक्षयंदानमुक्तमल्पाक्षरैरिदम् ॥ ४४ ॥ देशेकालेचपात्रेचधनंन्यायागतंयदि ॥ दीयतेब्राह्मणश्रेष्ठतदानंत्यायकल्पते ॥ ४५ ॥

चंद्रेवायदिवासूर्येदृष्टेराहोर्महाग्रहे ॥ अक्षयंकथितंदानंकेचिदूचुर्विशेषतः ॥ ४६ ॥ द्वादशीषुच्शुक्लासुविशेषाच्छ्रवणेनच ॥ तत्रयदी
यतेकिंचित्तदनंतंप्रजायते॥ ४७ ॥ विशेषाद्बुधयुक्तेषुपक्षांतेषुचसर्वदा ॥ तृतीयासुचसर्वासुशुक्लास्तत्रविशेषतः ॥ ४८ ॥ वैशाखस्यशुक्ल
पक्षेतुविशेषाद्दापिमानवैः ॥ आषाढीकार्तिकीमाघीवैशाखीचाविशेषतः ॥ ४९ ॥ पौर्णमास्यश्चतस्रोपिप्रोक्तादानेमहाफलाः ॥ व्यती
पातेषुसर्वेषुमासर्क्षेषुद्विजोत्तमाः ॥ राशिसंक्रमकालेषुतीर्थस्नेमेविशेषतः ॥ ३५० ॥ तुलामेषप्रवेशेतुयोगेतमिथुनस्यच ॥ रवेर्महाफलं
दत्तंतभ्येपिस्याम्महाफलम् ॥ ५१ ॥ यदाभानुःप्रविशतिसमकरंद्विजसत्तमाः ॥ आषाढेश्वयुजेचैवपौषेचैत्रेतथैवच ॥ ५२ ॥ द्वादशीप्रभृ
तिप्रोक्तंपुण्यंदिनचतुष्टयम् ॥ मिथुनंचतथाकन्यांकार्मुकंमीनमेवच ॥ ५३ ॥ प्रविष्टेभास्करेपुण्यंकथितंद्विजसत्तमाः ॥ षडशीतिमुखं
नामदानंदिनचतुष्टयम् ॥ ५४ ॥ अच्छिन्ननालेयद्दत्तंपुत्रेजातेद्विजोत्तमाः ॥ संस्कारैचैवपुत्रस्यतदक्षय्यंप्रकीर्तितम् ॥ ५५ ॥ इत्येयोवि
विधाःप्रोक्तास्तासुकार्यांयथोदिताः ॥ सर्वाश्रमेषुसद्भिःप्रेरितंधर्मसभीप्सुभिः ॥ ५६ ॥ सत्सन्नमेधिद्विजनाःकलिविधसिद्धयर्थमुक्तानिकिय
तिविप्राः ॥ दानानिवक्ष्याम्यथपूर्वधर्मस्याद्येनपुंसांविहितनपुण्यम् ॥ ५७ ॥ ब्रह्मेशहरिसूर्याणांस्कंदेमास्याश्विनांतथा ॥ मातृदुर्गा
ग्रहाणांचगृहाणिकारयेन्नरः ॥ ५८ ॥ इष्टिकादशकंवापियश्चार्पयतिविष्णवे ॥ अनेनविधिनाविप्रविष्णुलोकमवाप्नुयात् ॥ ५९ ॥ एवं
यःसर्वदेवानांमंदिरंकारयेन्नरः ॥ सयातिवैष्णवंलोकंप्राप्यंयोगशतैःकृतैः ॥ ३६० ॥ समाचरतियोभग्नंसुधाभिर्धवलैर्यदि ॥ कुरुतेदेवहर्म्यंच
विशिष्टैर्लेपचित्रकैः ॥ ६१ ॥ संमार्जयतियश्चापितद्वश्चाप्यंनुलेपयेत् ॥ प्रदीपंतत्रयोदद्याद्विष्णुलोकंसगच्छति ॥ ६२ ॥ पूजयेद्विधिनाय
स्तुपंचोपचारसंयुतः ॥ सविष्णुलोकमभ्येतियावदाभूतसंप्लवम् ॥ ६३ ॥ यावंत्यश्चेष्टकास्तत्राचितादेवस्यवेश्मनि ॥ तावन्त्यब्दसहस्रा

णितत्कर्तास्वर्गमाप्नुयात् ॥ ६४ ॥ संनिहत्यतडागानिपुष्करिण्यश्चदीर्घिकाः ॥ तथाकूपाश्चवाप्यश्चकर्तव्यागृहमेधिभिः ॥ ६५ ॥
देवमूर्धनिपुष्पाणियानितिष्ठंतिसत्तमाः ॥ तावत्यब्दसहस्राणितत्कर्तास्वर्गमाप्नुयात् ॥ ६६ ॥ स्नातमात्रंप्रकर्तव्यमेकाहिकमपि
क्षितौ ॥ यावत्पीत्वाजलंधेनुस्तृषार्तावितृषीभवेत् ॥ ६७ ॥ पिबंतिसर्वसत्वानितृषार्तान्यंभसामिह ॥ वर्षाणिविंदुतुल्यानितत्कर्ता
दिवमावसेत् ॥ ६८ ॥ उपकुर्वंतियावंतिगंडूषाणिक्रियासुच ॥ कुर्वतांस्नानशौचादितथैवाचमतामपि ॥ ६९ ॥ तावत्संख्या
निविप्राणांलक्षाणिदिविमोदते ॥ स्वर्गेअब्दसमावासःसेव्यमानोप्सरोगणैः ॥ ३७० ॥ आरामाश्चप्रकर्तव्यानानावृक्षैःसुशोभिताः ॥
अश्वत्थाम्रकपित्थाद्यैःखर्जूरैर्नारिकेरकैः ॥ ७१ ॥ द्रुमैर्मनोहरैरम्यैःफलपुष्पोपयोगिभिः ॥ जातीजपादिपुष्पैश्चशोभितास्तैःसमंततः ॥
॥ ७२ ॥ फलोपयोगिनःसर्वेतथापुष्पोपयोगिनः ॥ आरामेषुप्रकर्तव्यापितृदेवोपभोगदाः ॥ ७३ ॥ गाथामुदाहरन्त्यत्रवृद्धिदःक
वयोपरे ॥ वृक्षारोपकलोकानामुक्तायेपुण्यपादपाः ॥७४॥ अश्वत्थमेकंपिचुकंदमेकंन्यग्रोधमेकंदशचिंचिणीकम् ॥ कपित्थबिल्वामलकी
त्रयंचपंचाम्रवापीनरकंनयाति ॥ ७५ ॥ खादंतियावंतिफलानिवृक्षात्क्षुद्वह्निदग्धानरपक्षिसंघाः ॥ तावंतिवर्षाणिवसंतिनाकेवृक्षके
वापीत्रिदशौघसेव्याः ॥ ७६ ॥ यावंतिपुष्पाणिमहीरुहाणांदिवौकसांमूर्धनिभूतलेवा ॥ पिबंतितावंतिचवत्सराणांशतानि
नाकेरमतेगवापि ॥ ७७ ॥ यत्कालपक्वैर्मधुरैरजस्रंशाखाच्युतैःस्वादुफलैर्नगौघाः ॥ सत्वानिसर्वाण्यपितर्पयंतितच्छ्राद्धदानंमुनयो
वदंति ॥ ७८ ॥ उद्दिश्यविष्णुंजगतामधीशंनारायणंयःसुकृतंकरोति ॥ अनंतमाप्नोतिकृतंतुतस्ययस्मादनंतोभगवान्पुराणः ॥ ७९ ॥
दात्तानिसर्वाण्यभिधायविद्वानिष्टंचपूर्तंगृहमेधिकर्म ॥ कुर्वंतिशांतिमनुजाधिपायद्वक्ष्यामितस्मादथसर्वशांतिम् ॥ ३८० ॥ उक्तानिस

वेदानानिपूर्तमिष्टंचतत्समम् ॥ अतःशुभायवक्ष्यंतेगणेशादिकशांतयः ॥ ३८१ ॥ इतिबृहत्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांदानधर्मेष्टिपूर्तनिर्णयोनामअष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ त्रिभिःश्लोकसहस्रैस्तुत्रिभिर्वृत्तशतैरपि ॥ पराशरमुखाच्छ्रुत्वाशास्त्रंप्रोवचसुव्रतः ॥ १ ॥ शांतीनामथसर्वासांग्रहशांतिःपरास्मृता ॥ ग्रहेभ्योपिगणेशस्तुतस्यशांतिरथोच्यते ॥ २ ॥ यदिपुंकृतकर्माणिभवंतिफलदानिह ॥ तथाधर्मार्थकामाश्चसंसिद्ध्येयुःसदानृणाम् ॥ ३ ॥ तन्नृभिःक्रियमाणानांसर्वेषांकर्मणाममुम् ॥ विघ्नार्थमसृजद्ब्रह्माशंकरश्चविनायकम् ॥ ४ ॥ तेनोपहतपुंसांतुकर्मस्यानिष्फलंकृतम् ॥ स्त्रीणामपितथासर्वंक्रियमाणंतुनिष्फलम् ॥ ५ ॥ जलावगाहनंस्वप्नेकव्यादारोहणंतथा ॥ खरोष्ट्रम्लेच्छसंसर्गमुंडकाषायवाससाम् ॥ ६ ॥ पश्यंत्यात्मानमेवंहिसीदंतिप्रतिवासरम् ॥ यानिकुर्वीतिकर्माणितानिस्युःक्लेशदानिच ॥ ७ ॥ राजन्पुत्रोनराज्यात्स्यावरास्यानवकन्यका ॥ अंतर्वत्नीअपत्यास्यांआचार्यत्वेनसंद्विजाः ॥ ८ ॥ अधीयानस्तुविद्यास्याकृषिकृत्स्वस्यसंपदा ॥ वणिग्वृत्तिर्नलाभेनयुज्यतेतद्व्रतःसदा ॥ ९ ॥ तस्मात्तदुपशांत्यर्थंकुर्याच्छांतिविनायकीम् ॥ समभ्यर्च्यगणेशानंगणनाथंगणेश्वरम् ॥ स्नपनंकारयेत्तस्यविधिवत्पुण्यवासरे ॥ १० ॥ चतुर्थ्यांशुक्लपक्षेतुअयनेचोत्तरेशुभे ॥ पुण्यार्थंसर्वसिध्यर्थंकुर्याच्छांतिविनायकीम् ॥ ११ ॥ स्वासनासीनमाप्लाव्यमारक्तवृषचर्मणि ॥ सितसर्षपकल्केनसाज्येनोत्सादितस्यच ॥ १२ ॥ विलिप्तशिरसस्तस्यसर्वगंधैस्तथौषधीः ॥ अष्टौवाचतुरोवापिस्वस्तिवाच्यशुभान्द्विजान् ॥ १३ ॥ एकवर्णैश्चतुर्भिश्चपुंभिःकुंभैश्चयज्जलम् ॥ समानीतंक्षिपेत्तत्रवक्ष्यमाणांमृदस्त्विमाः ॥ १४ ॥ अश्वेभस्थानवल्मीकह्रदसंगममृत्तिकाः ॥ रोचनांगुग्गुलंगंधास्तस्मिन्नंभसितान्क्षिपेत् ॥ १५ ॥ एतद्वैपावनंस्नानंसहस्राक्षमृषिस्मृतम् ॥ तेनत्वाशतधारेणपावमान्यःपुनंत्वमुम् ॥ १६ ॥

नवभिःपावमानीभिःकुंभंतमभिमंत्रयेत् ॥ शक्रादिदशदिक्पालाब्रह्मेशशंकरादयः ॥ १७ ॥ आपस्तम्नतुदौर्भाग्यंशांतिददतुस
र्वदा ॥ सुमित्रियानइत्याद्यैर्मंत्रैरेकेभिषेचनम् ॥ १८ ॥ वदंतिवदतांश्रेष्ठदौर्भाग्यस्योपशांतये ॥ समुद्रागिरयोनद्योमुनयश्चपति
व्रताः ॥ १९ ॥ दौर्भाग्यंघ्नंतुतेसर्वेशांतियच्छंतुसर्वदा ॥ पादगुह्योरुजंघांत्रनितंबोदरनाभिषु ॥ २० ॥ स्तनोरुबाहुहस्ताग्रग्रीवां
अंसांगसंधिषु ॥ नासाललाटकर्णभ्रूकेशाग्रेपुचयात्स्थितम् ॥ तदापोघ्नंतुदौर्भाग्यंशांतियच्छंतुसर्वदा ॥ २१ ॥ स्नातस्यमस्तकेद
र्भान्साज्येनपरिगृह्यच ॥ जुहुयात्सार्षपंतैलमौदुंबरस्रुवेणच ॥ २२ ॥ मितश्चसंमितश्चैवतथाशाकलकंटकौ ॥ कूष्मांडोराजपुत्र
श्चेत्यंतेस्वाहासमन्वितैः ॥ २३ ॥ नामभिश्चबलिंदद्यान्मंत्रैर्नमःस्वधान्वितैः ॥ चतुष्पथंसमाश्रित्यशूर्पेकृत्वाकुशांस्तथा ॥
॥ २४ ॥ निधायतेषुसर्वेषुशुक्लाशुक्लांश्चतंडुलान् ॥ ओदनंपललोपेतंपक्वामान्मत्स्यकानपि ॥ २५ ॥ तथामांसंचकुल्माषांस्तथैवत्रिविधां
सुराम् ॥ पूरिकोंडेरकापूपान्फलानिमूलकंस्रजः ॥ २६ ॥ गणेशमातुः पार्वत्यास्ततःकुर्यादुपस्थितिम् ॥ दूर्वासर्षपपुष्पैश्चपूर्णमर्घांजलिं
क्षिपेत् ॥ २७ ॥ सौभाग्यमंबिकेदेहिभगंरूपंयशोपिच ॥ श्रियंपुत्रांश्चकामांश्चतथाशौर्यंचदेहिमे ॥ २८ ॥ गणेशमातरंबालेयत्किंचिन्मद
भीप्सितम् ॥ एकनाम्नैवतद्देहिदेहिगौरिवरान्वरान् ॥ २९ ॥ ततस्तुवाससीशुक्लेपरिधायाहतेशुभे ॥ सितचंदनलिप्तांगःसितस्रग्भूषणा
न्वितः ॥ ३० ॥ तानन्यांश्चद्विजान्सर्वान्भोजयेद्विविधाशनैः ॥ वस्त्रयुग्मंगुरोर्देयंतेषुतस्यवराशिषः ॥ ३१ ॥ एतेनसंपूज्यगणाधिनाथंवि
घ्नोपशांत्यैजननींतथास्य ॥ स्यात्तोंकसम्यग्विधिनासकामान्प्राप्नोतियान्यान्मनसासइच्छेत् ॥ ३२ ॥ स्नात्वाविधायार्चनमंबिकायाःसंपू
ज्यलोकान्सखिबंधुलोकान् ॥ आचार्यवृद्धान्वनितःकुमारीःप्रध्वस्तविघ्नःश्रियमेतिगुर्वीम् ॥ ३३ ॥ स्मृत्युक्तमंत्रैर्विधिवत्प्रयुक्तामित्यद्रिजा

नंदनपूजनंच ॥ कृत्वांतरायान्विनिहत्यसर्वान्कुर्यादथातोग्रहयोगमेनम् ॥ ३४ ॥ ॥ इतिविनायक शांतिः ॥ ॥ मुनीनांव्यासमुख्या
नांशक्तिसूनुः पुरोब्रवीत् ॥ शुभायंग्रहपूजायावदतस्तांनिबोधत ॥ ३५ ॥ यद्वर्णायत्सुताविद्धञ्जातादेशेषुयेषुच ॥ तेषांयदाधिदैवत्यंयस्
मिधश्चदक्षिणाचया ॥ ३६ ॥ यस्ययत्रचादिग्भागेमंडलंस्याद्विकस्वतः ॥ होमकर्मणियेविप्रायासंख्यासमिधामपि ॥ ३७ ॥ अग्निकुंडप्रमा
णंतुप्रमाणंसमिधामपि ॥ सर्वमेतद्यथोद्देशंवक्ष्यामिद्विजसत्तमाः ॥ ३८ ॥ रक्तःकश्यपजोभानुःशुक्लोब्रह्मसुतःशशी ॥ रक्तोरुद्रसुतोभौमः
पीतःसोमसुतोबुधः ॥ ३९ ॥ पीतोब्राह्मःसुराचार्यःशुक्लःशुक्रोभृगूद्वहः ॥ शनिःकृष्णोरवेःपुत्रःकृष्णोराहुःप्रजापतेः ॥ ४० ॥ कृष्णःकेतु
कृशानूत्थःकृष्णाःपापास्त्वगोप्यमी ॥ कालिंगोर्कोयामुनःसोमआवंत्योभौमउच्यते ॥ ४१ ॥ मागधोबुधइत्युक्तःसैंधवस्तुबृहस्पतिः ॥
सैंधवोदानवाचार्यःसौरिःसौराष्ट्रदेशजः ॥ ४२ ॥ राहुःसिंहलदेशोत्थोमध्यदेशभवोग्निजः ॥ जन्मदेशांइमेप्रोक्ताग्रहजातकवे
दिभिः ॥ ४३ ॥ शंभुंरविमुमांचंद्रस्कंदंभौमंहरिंबुधम् ॥ ब्रह्माणंचगुरुंविद्याच्छक्रंशुक्रंयमंशनिम् ॥ ४४ ॥ कालंराहुंचित्रगुप्तंकेतुमि
त्यधिदैवतम् ॥ रक्ताद्विज्ञायय कुर्यात्तत्सर्वसफलंभवेत् ॥ ४५ ॥ अर्कस्त्वर्कायहोतव्यःसर्वव्याधिविनाशनाः ॥ सुधांशवेचसोमायपला
शःसार्वकामिकः ॥ ४६ ॥ खदिरश्चार्थलाभायमंगलायविवेकिभिः ॥ सुरूपकृदपामार्गोहोतव्यश्चबुधायच ॥ ४७ ॥ प्रभाप्रदस्तथा
श्वत्थोहोतव्योऽमरमंत्रिणे ॥ उर्जासौभाग्यकृद्वेयोदैत्यामात्यायसद्विजैः ॥ ४८ ॥ शमीपापोपशांत्यर्थंहोतव्यामंदगामिने ॥ दीर्घायुर्धर्म
कृद्दूर्वाहोतव्याराहवेद्विजा ॥ ४९ ॥ धर्मसिद्ध्यर्थकृद्दर्भःसद्भिर्वह्निसूनवे ॥ दधिक्षीराज्यसंमिश्राःसमिधःशुभवृद्धये ॥ ५० ॥ प्रादेशमात्र
काःसर्वाअष्टावष्टोतरंशतम् ॥ अष्टाविंशतिरेकैकंसंख्यैषाप्रतिदैवतम् ॥ ५१ ॥ वृद्धौतुफलभूयस्त्वमुक्तादन्यत्तुरक्षसाम् ॥ नवभवनकं

लेख्यंचतुरस्त्रंतुमंडलम् ॥ ५२ ॥ ग्रहास्तत्रप्रतिष्ठाप्यांवक्ष्यमाणक्रमेणतु ॥ मध्येतुभास्करःस्थाप्यःपूर्वेदक्षिणतःशशी ॥ ५३ ॥ दक्षि
णेनधरासूनुर्बुधःपूर्वोत्तरेणतु ॥ उत्तरस्यांसुराचार्यःपूर्वस्यांभृगुनंदनः ॥ ५४ ॥ पश्चिमायांशनिःसूर्याद्राहुर्दक्षिणपश्चिमे ॥ पश्चिमो
त्तरतःकेतुरितिस्थाप्याग्रहाःक्रमात् ॥ ५५ ॥ पटेवामंडलेलेख्याईशान्यांदिशिपावकात् ॥ ताम्रोऽर्कःस्फाटिकश्चंद्रोरक्तचंदनकोपरः ॥ ९
॥ ५६ ॥ सोमसूनुसुराचार्योस्वर्णवर्णौप्रकीर्तितौ ॥ राजतोभृगुपुत्रश्चकार्ष्णायसःशनैश्चरः ॥ ५७ ॥ राहुश्चसैसकःकार्यःकार्यःकेतुश्चकां
स्यजः ॥ सर्वानेतन्मयान्कृत्वासमभ्यर्च्याःसदागृहे ॥ ५८ ॥ लेख्यायद्वर्णकैःस्वैःस्वैर्विधिवत्पिष्टकेनवा ॥ ग्राहाणांसाधिदेवानांप्रतिष्ठापन
मंत्रकान् ॥ ५९ ॥ वदंतिमंत्रतत्त्वार्थवेदिनोद्विजसत्तमाः ॥ आदित्यगर्भमित्युक्तमग्निंदूतमनेनच ॥ एताभ्यांस्थापयेदर्कंत्र्यंबकमितिशंक
रम् ॥ ६० ॥ अप्स्वंतरमितिशीतांशुंश्रीश्चतेइतिपार्वतीम् ॥ स्योनापृथिवीतिभौमंयदक्रंदोतिवागुहम् ॥ इदंविष्णुर्बुधः
स्थाप्यस्तद्विष्णोरितिवैहरिः ॥ इंद्रआसांसुराचार्यआब्रह्मन्नितिवेधसम् ॥ ६१ ॥ इंद्रदेवीर्भृगोःसूनुःसजोषेत्यमराधिपम् ॥ शंनोदेवीरवेः
सूनुर्यमायत्वातथायमः ॥ ६२ ॥ आयंगौरितिराहुश्चकालःकार्षीरसीतिच ॥ ब्रह्मजज्ञातिकेतुश्चचित्रश्चित्रावसोरिति ॥ ६३ ॥ ब्रूयुरेतांश्च
मंत्रांश्चमूलमंत्रास्तथापरे ॥ आकृष्णेनेतितीव्रांशोरिमंदेवानिशाकरम् ॥ ६४ ॥ अग्निर्मूर्धेतिभौमस्यउद्बुध्यस्वबुधस्यच ॥ बृहस्पतेअति
गुरोरन्नात्परिश्रुतोभृगोः ॥ ६५ ॥ शन्नोदेवीःशनैर्गतुःकांडात्कांडात्तमस्यच ॥ केतुंकृण्वन्नग्निसूनोरितिमंत्राःप्रकीर्तिताः ॥ ६६ ॥ वेदे
मंत्रैर्विनार्काश्चद्विधिनोस्तिद्विजन्मनाम् ॥ कर्तव्याश्चरवोमंत्रैःस्वैःस्वैश्चप्रतिदैवतम् ॥ ६७ ॥ सघृताःसयवाश्चापिहोतव्याश्चद्विजैस्तिलाः ॥
मध्यमानामिकामूलल्ग्नांगुष्ठचतसृभिः ॥ ६८ ॥ यावंतोंगुलिभिर्ग्राह्यास्तिलास्तावद्भिराहुतिः ॥हस्तमात्रंपृथक्केनवैधोपितावतैवतु॥६९॥ ॥६४

बाहुमात्रंवदंत्येकेचैकेचारत्निमात्रकम् ॥ चतुरस्रंखनेत्कुंडमेकयोनिसमन्वितम् ॥७०॥शुभमेखलयायुक्तंसुशांतिकरमुत्तमम्॥होमार्थंमंडपं
कुर्याच्चतुर्द्वारंसतोरणम् ॥ ७१ ॥ चतुर्दिक्षुध्वजाकार्यानानावर्णाःशुभावहाः॥तथातत्रोदकुंभाश्चदूर्वापल्लवसंयुताः ॥ पुनर्नवीकृतंसद्मंमंडपा
भावआश्रयेत् ॥ ७२ ॥ षट्कर्मनिरताःशांतायेनदग्धाःप्रतिग्रहैः ॥ नियोज्यास्तेग्निकार्येदोःस्फुरन्मंत्राद्विजोत्तमाः ॥ ७३ ॥ प्रति
ग्रहाग्निदग्धस्यजपहोमादिकुर्वतः ॥ यस्यमंत्राण्यवीर्याणितत्कृतंकर्मनिष्फलम् ॥ ७४ ॥ ओदनंसगुडंभानोःपायसंचक्षपाकृतः ॥ हविष्यं
भूमिपुत्रस्यक्षीरान्नंचबुधस्यच ॥ ७५ ॥ षाष्टिक्यंब्रह्मपुत्रस्यदध्नाचभार्गवस्यच ॥ पूर्णहविःशनैर्गतूरसंराहोःशृताशृतम् ॥ ७६ ॥
चित्रान्नमग्निसूनोश्चभोज्यानामभिसस्यजाः ॥ कृतहोमास्तथान्येपियेसद्वृत्ताद्विजोत्तमाः ॥ ७७ ॥ यथावर्णानिवासांसिदेया
निकुसुमानिच ॥ देयागंधाश्चसर्वेषांदेयाधूपश्चगुग्गुलः ॥ ७८ ॥ धेनुःशंखोवृषःस्वर्णंवासांस्यंश्वःसिताच्चगौः ॥ अयश्चच्छा
गलश्चैवक्रमशोदक्षिणाःस्मृताः ॥ ७९ ॥ प्रत्यहंप्रतिमासंचप्रत्यब्दंवाविधानतः ॥ वर्णिभिश्चग्रहापूज्याराजभिश्चसदैवहि ॥ ८० ॥ दुस्थि
तोयस्तुयस्यस्यात्पूज्यस्तस्यसयत्नतः ॥ वेधसैतेनियुक्ताःप्राक्स्वभक्तंपूजयिष्यथ ॥ ८१ ॥ वरंयच्छंतिसंहृष्टाविप्रावह्निर्नृपाग्रहाः ॥
असंतुष्टादहंत्येतितस्मात्तानर्चयेत्सदा ॥ ८२ ॥ ग्रहाधीनमिदंसर्वमुत्पत्तिप्रलयादिकम् ॥ जगत्प्रभावाभावौचतस्मात्पूज्यतमाग्रहाः ॥
॥ ८३ ॥ सानुकूलैर्ग्रहैर्योनिकुर्यात्कर्माणिमानवः ॥ सफलानिभवंत्यस्यनिष्फलानिस्युरन्यथाः ॥ ८४ ॥ कुर्वंतिचैतद्विधिनाग्रहाणां
मातिथ्यमब्दंप्रतिवासरंये ॥ आरोग्यदेहाधनधान्ययुक्तादीर्घायुषःस्त्रीसहिताभवंति ॥ ८५ ॥ ॥ इतिग्रहशांतिः ॥ ॥ वसतस्त्वकस्मात्सदने
ष्ववदोद्भुतंवयोविशेयुर्यदरण्यवासिनः ॥ विशेषतोगृध्रकपोतपिंगलास्तथैवचोलूकसकाकिवायसाः ॥ ८६ ॥ तरक्षुगोमायुमृगारित्रक्ष

 

कादिवाप्यकस्मादकुतोऽपिनिर्भयाः ॥ विज्ञांतियस्यैतदतीवचाद्भुतंगृहेपुरेशांतिकमेवसिद्धये ॥ ८७ ॥ यस्याद्भुतानिजायंतेमृत्युंतस्यवदेद्बु
धः ॥ धनधान्यक्षयंचापिभार्यापुत्रक्षयंतथा ॥ ८८ ॥ अंत्यद्भुतानिजायंतेवर्णानांगृहमेधिनाम् ॥ नानाविधानितेषांतुप्रशांत्यैशांतिरिष्यते
॥ ८९ ॥ भयंवाजायतेशत्रोर्नृपाद्वाजायतेभयम् ॥ तस्माच्छांतिर्विधातव्यायथोक्तामुनिपुंगवैः ॥ ९० ॥ यदिगोधूमशाखायांयवशाखो
पजायते ॥ यवेगोधूमशाखास्यादेवंसर्वाशनेष्वपि ॥ ९१ ॥ सर्षपेतिलशाखाचेत्तिलशाखासुसर्षपाः ॥ माषेमुद्गेषुचतथारक्तवृष्टिर्भवेद्यदि
॥ ९२ ॥ अंतःप्रपूर्णकुंभेषुज्वलन्नग्निर्यदीक्ष्यते ॥ उद्वर्तनंचकूपानांविनर्तुमधुजालकम् ॥ ९३ ॥ विधिवद्वायुलिंगैश्चनिर्वाप्यकायवंचरुम् ॥
महावाताथसततंहृदयंतुप्रशाम्यतु ॥ ९४ ॥ त्रिपंचसप्तवाहुत्वासर्वत्राप्यन्नतुल्यता ॥ स्त्रियोवागोमहिष्योवासूतोवाचरुपुंड्रकौ ॥ ९५ ॥
द्वौद्वौयत्रप्रजायेतेशांतिस्तत्रविधीयते ॥ वृषवद्वोढयंनस्याद्वडवांश्वंयदारुहेत् ॥ ९६ ॥ अश्वतरीप्रसूतेह्निप्रस्वेदःप्रतिमासुच ॥ मृदंगपट
हादीनामकुतोपिध्वनिर्यदि ॥ ९७ ॥ गृध्रकाककपोताद्याविशेयुर्यदिवागृहे ॥ यवपिष्टेननिर्वाप्यविधिवद्वारुणंचरुम् ॥ ९८ ॥ मंत्रैर्वरुण
दैवत्यैर्जुहुयाद्वरुणायतम् ॥ महावरुणदेवायजलानांपतयेतथा ॥ ९९॥ अन्यैर्वरुणदैवत्यैर्मंत्रैश्चजुहुयाच्चरुम् ॥ जुहुयादाहुतीस्तिस्त्रोमंत्रैश्च
वरुणायतं॥१००॥अन्नस्यतुल्यतांकृत्वास्वाहांतैर्वरुणदैवतैः ॥ इंद्रचापेक्षणंरात्रौशस्त्रप्रज्वलनंतथा ॥१॥ गजाश्वशफवस्त्रांतर्ज्वलनंचप्रतीक्ष
णम् ॥ स्थूणाप्ररोहणंयत्स्याद्भांडस्थानप्ररोहणम् ॥२॥ विद्युन्निर्घातवज्राणांपतनंवाभवेद्यदि ॥ पृदाकुकाकसंसर्गोविपरीतान्यदर्शनम् ॥३॥
शुभायचरुराग्नेयोनिर्वाप्योविधिवद्द्विजैः ॥ अग्नयेस्त्वग्निराजायमहावैश्वानरायच ॥ ४ ॥ हृदयेममयच्चैतत्तत्सर्वंचवदेद्बुधः ॥ ग्रहशांति
श्चसर्वत्रशनैःपूजाविशेषतः ॥ ५ ॥ दक्षिणासवृषागौश्चवस्त्रयुग्मंद्विजातये ॥ प्रदद्याद्दोषशांत्यर्थंसर्वोत्पातेषुवैद्विजाः ॥ ६ ॥ एतेषु

चान्येष्वपिचाद्भुतेषुजातेषुसावित्रिजपंसहस्रम् ॥ होमंविदध्यादपिविष्णुमंत्रैर्ब्रह्मेशमंत्रैरपिवाद्विजन्मा ॥ १०७ ॥ ॥ इतिशांत्यध्यायेऽद्भुतशांतिः ॥ ॥ अभिधास्येऽथरुद्राणांशांतिर्यागृहमेधिनाम् ॥ पंचांगानांविधानंतुयत्कृतंहंतिपातकम् ॥ १ ॥ ब्राह्मणोविधिवत्स्नात्वासर्वोपद्रवनाशनम् ॥ कुर्याद्विधानंरुद्राणांयजुर्विधाननिर्मितम् ॥ २ ॥ इषेत्वादिषुमंत्रेषुखंब्रह्मांतेषुयाःक्रियाः ॥ दशप्रणवयुक्तेषुभूर्भुवःस्वरिती च ॥ ३ ॥ आर्षंछंदश्चदैवत्यंन्यासंचविनियोगतः ॥ पराशरोदितंवक्ष्येशेषंमुनिविभाषितम् ॥ ४ ॥ मनोज्योतिरबोध्यग्निर्मूर्धानंचमर्माणिते ॥ मानस्तोकइतिह्येतत्प्रथमंपंचकंस्मरेत् ॥ ५ ॥ यातेरुद्रेतिचूडायांशिरोस्मिन्महत्यर्णवे ॥ असंख्यातासहस्राणिललाटेविन्यसेद्द्विजः ॥ ६ ॥ चक्षुषोर्विन्यसेद्धेतुत्र्यंबकंतुयजामहे ॥ मानस्तोकइतिह्येतन्नासिकायांन्यसेद्बुधः ॥ ७ ॥ अवतत्यधनुर्वक्त्रेनीलग्रीवौतथा गले ॥ नमस्तेआयुधेत्येतत्स्मरेन्मंत्रंप्रकोष्ठयोः ॥ ८ ॥ विन्यसेद्बाहुस्तुमंत्रोयंयेतीर्थानीतिहस्तयोः ॥ नमोस्तुकिरिकेभ्योवैहृदयेमलनाशनम् ॥ ॥ ९ ॥ नाभ्यांविद्वान्न्यसेन्मंत्रंनमोहिरण्यबाहवे ॥ गुह्येमंत्रस्तुसंस्मर्यइमारुद्रायइत्यपि ॥ १० ॥ मानोमहांतइत्यूर्वोरेषतेरुद्रजानुनोः ॥ अवरुद्रमितिह्येतंजंघयोर्मंत्रमुच्चरेत् ॥ ११ ॥ कवचिमध्यमाबद्धेतदुपविलिमनइत्यपि ॥ नेत्रंतुनीलग्रीवायप्रमुंचधन्वनोस्त्रकम् ॥ १२ ॥ यएतावंतएतेनविदध्यादिक्प्रबंधनम् ॥ ॐ मोमितिनमस्कारंततोभगवतेपुनः ॥ १३ ॥ रुद्रायेतिविधानज्ञोदशाक्षरंततोन्यसेत् ॥ प्रणवंविन्यसेन्मूर्ध्निनकारंनासिकांतरे ॥ १४ ॥ मोकारंतुललाटाग्रेभकारंमुखमध्यतः ॥ गकारंकंठदेशेतुवकारंहृदयेन्यसेत् ॥ १५ ॥ तेकारंदक्षिणेहस्तेरुकारंवामतोन्यसेत् ॥ द्राकारंनाभिदेशेतुयकारंपादयोर्न्यसेत् ॥ १६ ॥ त्रातारमिंद्रत्वंनोअग्नेसुगंनःपंथामितिह्यपि ॥ सत्वायामिवदेदानोनियुद्भिरित्यपीरयेत् ॥ १७ ॥ वयंसोमतमीशानंअस्मेरुद्राइतिस्मरेत् ॥ स्योनापृथिविनाह्येतद्द्विजःकुर्वीतसंपुटम् ॥

॥ १८ ॥ सुत्रामादिदिशांपालाःप्राच्यादिषुस्मरेदथ ॥ रौद्रीकरणमेतद्वैकृत्वापापैःप्रमुच्यते ॥ १९ ॥ यक्षरक्षःपिशाचाद्याःप्रेतभूतग्र
हादिकाः ॥ दुष्टदैवत्यशाकिन्योरेवत्योवृद्धकाश्चयाः ॥ २० ॥ सिंहव्याघ्रादयोऽरण्येयेदुष्टाःश्वापदाद्विजाः ॥ म्लेछबंधकचौराद्यायमदूता
वृकादयाः ॥ २१ ॥ रौद्रभूतामिमंसर्वेद्विजंपश्यंतिवह्निवत् ॥ देदीप्यमानमर्चिर्भिर्दुष्टदिग्बंधकारकम् ॥ २२ ॥ दह्यमानादवीमांसःसप्तधा
मःसुधामभिः ॥ प्रणश्यंतिहियेदुष्टाद्विजास्तेरुद्ररूपिणः ॥ २३ ॥ पंचास्यंसौम्यमात्मानंसर्वाभरणभूषितम् ॥ मृगलांछनमूर्धानंशुद्ध
स्फटिकसंनिभम् ॥ २४ ॥ फणासहस्रविस्फूर्जदुरगेंद्रोपवीतिनम् ॥ सप्तार्चिर्वज्ज्वलद्बालजटाजूटकिरीटिनम् ॥ २५ ॥ सहस्रकरवद्भ्रा
जत्खट्वांगांगविभूषितम् ॥ ब्रह्मांडखंडवत्कारकपालकरधारिणम् ॥ २६ ॥ देदीप्यमानंचंद्रार्कज्वलदग्नित्रिलोचनम् ॥ त्रैलोक्यद्युतिकृद्भा
स्वत्स्कंधकापालमालिनम् ॥ २७ ॥ दीप्तनक्षत्रमालारुद्राक्षमालाधरंद्विजाः ॥ निःशेषवारिसंपूर्णकमंडलुधरंत्वजम् ॥ २८ ॥ जगद्व्याधि
यक्तुन्नादमजंडमरुधारिणम् ॥ केयूरबद्धनागेंद्रंमूर्ध्निमणिविराजितम् ॥ २९ ॥ मेखलाकिंकिणीमालामुक्ताहारविभूषितम् ॥ घुर्घुराव्य
क्तनिर्गच्छद्गंभीररवनूपुरम् ॥ ३० ॥ सहेमपट्टनीलाभंव्याघ्रचर्मोतरीयकम् ॥ विद्युल्लताप्रभागंगाभृतमूर्धसुरार्चितम् ॥ ३१ ॥ समस्त
भुवनाभारधारणोल्लासनास्थितम् ॥ त्रैलोक्यवनितामौलिवद्धदेहार्धपार्वतिं ॥ ३२ ॥ लक्षसूर्यप्रभाभास्वत्रैलोक्यंकृतपांडुरम् ॥ अमृतपु
तहृष्टांगंदिव्यभोगसमाकुलम् ॥ ३२ ॥ दिग्देवतासमायुक्तंसुरासुरनमस्कृतम् ॥ नित्यंशाश्वतमव्यक्तंव्यापिनंनंदिनंध्रुवम् ॥ ३४ ॥ द्वि
जोध्यात्वैवमात्मानंसम्यग्रुद्रस्वरूपिणम् ॥ संप्रध्वस्तांतरायःसंस्ततोयजनमाचरेत् ॥ ३५ ॥ अनुलिप्तेसुलिप्तेचदेशेगोचर्ममात्रके
स्थंडिलेंबुजमालिख्यमंत्रैःप्रक्षालनंपुनः ॥ ३६ ॥ तत्रपूजाप्रकर्तव्यानमश्शंभवायच ॥ मानोमहांतमितिंचसिद्धमंत्रंस्मरेद्बुधः ॥ ३७ ॥

स्वललाटेपुनर्भ्यायेत्तेजोरूपंशिवंद्विजः ॥ दशाक्षरेणमंत्रेणदद्यात्पादार्घ्यकौपुनः ॥ ३८ ॥ न्यासमंत्रैश्चसोंकारैर्मानस्तोकेतनेत्यपि ॥
शंभवायेतिमंत्रेणदद्याद्गंधोदकादिकम् ॥ ३९ ॥ पुष्पधूपप्रदीपादियथालाभंनिवेद्यकम् ॥ दशाक्षरेणतेनैवनमःकुर्यात्पुनर्द्विजाः ॥ ४० ॥
शिखातस्यतुरुद्रस्योत्तरनारायणंद्विजाः ॥ शिरःपुरुषसूक्तंचशिवसंकल्पकंचहृत ॥ ४१ ॥ कवचंचाप्रतिरथंनेत्रंविभ्राड्बृहद्वयत् ॥
शतरुद्रियमस्त्रंचदेवस्याग्रेप्रकल्पयेत् ॥ ४२ ॥ पंचांगानिस्मरेद्धृष्टःप्रणवंचजपेद्विजः ॥ उद्धृत्यप्रणवेनेशंविकिरीतिविसर्जयेत् ॥
॥ ४३ ॥ रुद्ररूपोद्विजोयद्यत्कुर्यात्तत्तद्धिसिध्यति ॥ अक्षतान्वातिलान्वापियवान्वासमिधोपिवा ॥ ४४ ॥ शंभवायेतिजुहुया
त्सर्वास्तानाज्यसिक्तकान् ॥ पंचपंचाथषट्षड्वाअष्टावष्टौतथापिवा ॥ ४५ ॥ दशदशैकादशवाजुहुयात्साधकोद्विजः ॥ द्विजः
सदारःसंतुष्टःशुचिःस्नातोयतेंद्रियः ॥ ४६ ॥ जपतर्पणहोमादौरतोयीवत्सरंजपेत् ॥ दशानांसोश्वमेधानांफलमाप्नोतिवैद्विजः ॥ ४७ ॥
सौवर्णपृथिवीदानपुण्यभाग्जायतेनरः ॥ महापापोपपापैश्चमुक्तोरुद्रत्वमृच्छति ॥ ४८ ॥ एकादशगुणान्रुद्रानावृत्यायातिरुद्रताम् ॥
रुद्रजापीशुचिःपुण्यःपांक्तेयःश्राद्धभुग्वरः ॥ ४९ ॥ पूर्वजानांशतंसैकंतारयेद्रुद्रजाप्यकृत् ॥ एकतोयोगिनःसर्वेज्ञानिभिःसहतद्व्रतैः ॥
॥ ५० ॥ एकतोरुद्रजापींतुमान्यःसर्वैस्तुदैवतैः ॥ पात्रमत्रपवित्रंतुनाधिकंरुद्रजापिनः ॥ ५१ ॥ तस्मैदत्तंत्वतद्भुक्तंतदानंत्यायकल्पते ॥
वेदांगवेदिनामंतःशिवभक्तःसदाधिकः ॥ ५२ ॥ इतिवृहत्पाराशरीयरुद्रपूजाविधिः ॥ अथातःसिद्धिकामःसन्कंदमूलफलाशनः ॥
गोमूत्रयावकक्षीरदधिशाकाज्यभोजनः ॥ १ ॥ हविष्यभोजनोवासौविप्रोमुन्यन्नभोजनः ॥ जपहोमादिकुर्वाणोयथोक्तफलभाग्भवेत् ॥
॥ २ ॥ शिरसासहरुद्राणांजपैर्दशशतैर्ध्रुवम् ॥ सर्वेमंत्राभयंतस्यब्राह्मणस्योक्तकारिणः ॥ ३ ॥ सिद्धामंत्राद्विजेंद्रस्यचिंतितार्थफल

प्रदाः ॥ रुद्रस्यैवास्यसर्वेतेभवंतीश्वरनोदिताः ॥ ४ ॥ एकादशशुभान्कुंभानादृत्यविधिसंमितान् ॥ सहिरण्यान्सवस्त्रांश्चफलपुष्पो
पशोभितान् ॥ ५ ॥ एकादशाहमात्मानमन्यंवाहितकाम्यया ॥ विनायकोपसृष्टंचस्नायात्काकपदाहतम् ॥ ६ ॥ मृतवत्सांकाक
वंध्यांस्नापयेच्चतथानरान् ॥ जपेदेतत्सकृद्विप्रःसर्वदोषैर्विमुच्यते ॥ ७ ॥ अनड्वाहंचवस्त्राणिदद्याद्धेनुंचदक्षिणाम् ॥ भोजयेद्विदुषोविप्रा
न्समाप्तौकर्मणिद्विजः ॥ ८ ॥ भक्त्यैकादशवस्त्राद्यैर्यथाशक्त्यासमर्चयेत् ॥ अथवाचरुभैक्षाशीसाशीरोरुद्रसहस्रकम् ॥ ९ ॥ जपेद्गोष्ठेतथा
रण्येसिद्धक्षेत्रेशिवालये ॥ अग्न्यागारेसमुद्रेवानदीनिर्झरपर्वते ॥ १० ॥ जपेदन्यंत्रवासिद्धाःशुचौदेशेमनोरमे ॥ धीरोदृष्टव्रतोमौनीत्य
क्तक्रोधोयतेंद्रियः ॥ ११ ॥ धौतवासास्त्वधःशायीरुद्रलोकेमहीयते ॥ नमोगणेभ्यइत्यस्यमंत्रस्यब्राह्मणोक्तम् ॥ १२ ॥ जप्त्वाचश्रीफ
लेहुत्वासर्वकार्येषुसिद्धिभाक् ॥ नमोस्तुनीलकंठायेत्येतन्मंत्रेणसप्तधा ॥ १३ ॥ आवर्त्योदकमामंत्र्यविषार्तश्रवणेजपेत् ॥ विषेणमु
च्यतेसद्यःकालदष्टोपिजीवति ॥ १४ ॥ विषस्याभिभवोनस्यान्नरस्यतस्यकर्हिचित् ॥ ग्रहग्रस्तंज्वरग्रस्तंरक्षःशाकिनिदूषितम् ॥ १५ ॥
ब्रह्मराक्षसग्रस्तंवाअन्यदोषोपगूहितम् ॥ प्रमुंचधन्वनइतिभस्मनासर्षपैस्तथा ॥ १६ ॥ ताडयेन्मुंचमुंचेतिब्रूयाच्छीघ्रंतुमुंचाति ॥
नमःशंभवइत्यस्यमंत्रस्यचायुतंद्विजः ॥ १७ ॥ जप्त्वाखदिरसमिधोहुत्वाविप्रःसहस्रकम् ॥ तीक्ष्णतैलप्लुतंसम्यङ्मंत्रांतेचायुतंजहि ॥ १८ ॥
फट्फट्कारेणजुहुयात्क्षय्यरोगोचिराद्भवेत् ॥ जलमध्येशतावर्तात्सद्योवृष्टिर्निगद्यते ॥ १९ ॥ नाभिमात्रेजलेविप्रःप्रविश्यजुहुयाज्ज
लम् ॥ कुर्यादेकार्णवांधात्रींमंत्रमाहात्म्यतोभृशम् ॥ २० ॥ नमःश्वभ्यइत्यमुनामंत्रेणतुसहस्रकम् ॥ लवणमध्वाहुतिभीराजाशीघ्रंवशो
भवेत् ॥ २१ ॥ द्विगुणाःपलाशसमिधोमहादारुणीप्रवर्तते ॥ त्रिगुणेनचपद्मानांपातालंसिध्यतिध्रुवम् ॥ २२ ॥ चतुर्गुणेनमंत्रेणवरदाश्रीः प्रव

तेते ॥ समुद्रमानदीकूलेपुलिनेवापवित्रके ॥२३॥खड्गोपरिश्रीफलानांहुत्वात्रिंशच्छतानिच ॥ खड्गविद्याधरोविप्रःशिवाज्ञातःप्रजायते ॥
॥ २४ ॥ अणिमाद्यष्टगुणंहुत्वाजपेन्मंत्रसहस्रकं ॥ अणिमादिकसिद्धीनांपतिरेवभवेद्द्विजः ॥ २५ ॥ छंदोदैवतमार्षेयमथातःशतरुद्रिये ॥
ज्ञात्वेनकर्मसम्यक्त्वंद्विजानांयेनजायते॥२६॥आद्यानुवाकेरुद्राणामाद्यायांचऋचिद्विजः॥छंदोगायत्रमन्यासुअनुष्टुप्तिसृषुस्मृतम् ॥ २७॥
पंक्तिस्तिसृषुविज्ञेयाअनुष्टुप्सप्तसुस्मृतम् ॥ द्वयोश्चजगतीविप्राउक्तमाद्यानुवाकयोः ॥ २८ ॥ अन्यानुवाकेप्रथमाबृहतीजगतीतथा ॥ अनु
ष्टुप्चतृतीयायांद्वयोस्त्रिष्टुप्स्मृताद्विजाः॥२९॥ अपरासुतथानुष्टुप्वनुवाकद्वयंस्मृतम् ॥ रुद्रःसर्वासुदैवत्यंविनियोगोयथोचितम् ॥३०॥
यज्जाग्रतादिषट्केचशिवसंकल्पमात्रकम् ॥ रुद्रस्तुदेवताषट्सुविनियोगोजपादिषु ॥ ३१ ॥ सहस्रशीर्षाइत्यादिद्विगुणाष्टसुदेवताः ॥
पुरुषोयोजगद्बीजमृषिर्नारायणःस्मृतः ॥ ३२ ॥ छंदःसर्वासुवानुष्टुब्विनियोगोजपादिषु ॥ अद्भ्यःसंभूतइत्यादेरुत्तरनारायणऋषिः॥३३॥
आशुःशिशानइत्यादिरप्रतिरथमुच्यते ॥ एतन्नामामुनिस्तत्रदेवताचामरेश्वरः ॥ ३४ ॥ पूर्वानुवाकेदैवत्यंत्रिष्टुप्छंदःप्रकीर्तितम् ॥ त्रिष्टुप्
छंदोजपादौचविनियोगोयथोचितम् ॥ ३५ ॥ त्र्यंबकमितिचैवात्रवसिष्ठस्यार्षमुच्यते ॥ देवताअर्यमायत्रछंदस्त्रिष्टुप्प्रकीर्तितम् ॥ ३६ ॥
विभ्राड्बृहत्चइत्यादौसूर्योदैवतमुच्यते ॥ एतत्संचिंत्यसंफलंद्विजाग्र्योरुद्रजाप्यकृत् ॥ ३७ ॥ यद्यदारभतेकर्मतत्तस्यफलदंभवेत् ॥
वेदाध्यायेस्यदातॄणांश्रद्धयाद्रविणस्यच ॥ ३८ ॥ प्रजानामायुषःकीर्तेर्भूयस्त्वंरुद्रजापिनः ॥ इमंमंत्रंपवित्रंचरहस्यंपापनाशनम् ॥ ३९ ॥
रुद्रविधिंविधिश्रेष्ठंकुर्याद्विप्रःशिवेनरः ॥ शैवागमविशेषज्ञोवेदवेदांगपारगः ॥ ४० ॥ कुर्याद्यएतद्विधिवद्विधानंशंभोरजस्रंप्रथितंद्विजेंद्राः ॥
प्राप्नोतिलोकंसशिवस्यसाक्षादत्रापिसस्याच्छिववत्सपूज्यः ॥ ४१ ॥ मंत्राणिसर्वाणिजसद्विजस्यनिर्देशकर्माणिभवंतितस्य ॥ यः साधयेत्प्रो

क्तविधानविज्ञोमंत्राभिपूज्यःसचशंभुवत्स्यात् ॥ ४२ ॥ मंत्रत्रिनेत्रंजुहुयाद्धुताशेयोबिल्वपत्रैर्घृतदुग्धमिश्रैः ॥ निहत्यमृत्युंश्रियमेतिधात्र्यां प्राप्नोतिपश्चाच्छिवलोकमेव॥४३॥पंचभागश्चषट् त्रातःपंचेंद्रंपंचवारुणम् ॥ षट्जातीचजपित्वातुसर्वपापैःप्रमुच्यते॥ ४४ ॥इतिबृहत्पाराशरीयेशांत्यध्यायेरुद्रशांतिः॥ ॥अथातःसंप्रवक्ष्यामितडागादिविधिंशुभम् ॥ कृतेनयेनतेषांतुप्रतिष्ठासंप्रजायते॥ १॥अस्मत्तातस्यतातेनपृच्छकेरघुपुंगवे॥तडागाद्युत्सवेप्रोक्तोविधिःसोयंप्रकीर्त्यते॥ २ ॥दीर्घिकासुतडागेषुसन्निहत्यासुयोविधिः ॥ तंवसिष्ठोवदत्सम्यक्दशरथस्यपृच्छतः॥३॥तस्माच्चश्रुतवाञ्छक्तिःशुश्रावातः पराशरः ॥ तत्प्रसादेनतत्प्रोक्तोयोविधिःसोयमुच्यते॥४॥तडागादिनिपानानांयावन्नोत्सर्जनंकृतम् ॥ तावत्तत्परकीयंतुस्नानादीनामनर्हकम् ॥५॥ अप्रतिष्ठितदेवानांनकार्यंपूजनंनरैः ॥ अप्रतिष्ठितखातस्यनामपेयंतोयमुच्यते ॥ ६ ॥ तदुत्सर्गःप्रकर्तव्योनिजवित्तानुसारतः ॥ वित्तशाठ्यंनकुर्वीतइत्युवाचपराशरः॥७॥तद्विधिज्ञःशुचिःशांतोब्राह्मणोधर्मवृद्धये॥विपरीतमतिर्यःस्यात्तंत्कृतंकर्मनिष्फलम् ॥ ८ ॥ तडागपालिपृष्टेतुमंडपंकारयेद्द्विजः ॥ पूर्वोत्तरंप्रवेदेशेशुचिःस्वस्थःसमाहितः ॥ ९ ॥ चतुरस्रंचतुर्द्वारंदशहस्तप्रमाणकम् ॥ स्वामिहस्तप्रमाणेनतोरणानिचकारयेत् ॥ १० ॥ पताकाविविधाःकार्यानानावर्णाःसमंततः ॥ शुभपल्लवसंयुक्ताद्वारेषुकलशाःस्मृताः॥ ११ ॥यथावर्णयथाकाष्ठंयथाकार्याःप्रमाणतः॥तथायूपान्प्रवक्ष्यामिवर्णानांहितकाम्यया ॥ १२ ॥पालाशोब्राह्मणस्योक्तोनैयग्रोधस्तुभूभुजः ॥ बैल्वोवैश्यस्ययूपःस्याच्छूद्रस्यौदुंबरःस्मृतः ॥ १३ ॥ शिरःप्रमाणोविप्रस्यआकंठंक्षत्रियस्यच ॥ उरःप्रमाणोवैश्यस्यशूद्रस्यनाभिमात्रकः ॥ १४ ॥ वेदिकापादमूलेतुयूपस्तत्रनिखन्यते ॥ यूपस्यदक्षिणेभागेतोरणंतत्रकारयेत् ॥ १५ ॥ ब्राह्मस्थानेचतन्मध्येअष्टौभागाःप्रकीर्तिताः ॥ तेषामुत्तरतःसोमंकुबेरंकुविदंगेति ॥१६॥धनदंधन्वनागेतिईशावास्येतिशंकरम् ॥ आकृष्णेत्यादिभि

मंत्रैःस्वैःस्वैर्ग्रहांश्चपूजयेत् ॥ १७॥ त्रातारमिंद्रमितींद्रमग्निंदूतमितिपावकम् ॥ अग्निःपृथुरित्यादिधर्मराजंद्विजोत्तमाः ॥१८॥तद्विष्णोरिति
वैविष्णुंनमःसूतेतिनिर्ऋतिम् ॥ सप्तऋषयइत्यादिमंत्रैःसप्तऋषींस्तथा ॥ १९ ॥ वरुणस्योत्तंभनमसिवरुणंचप्रपूजयेत् ॥ एवंद्वाविंशति
स्थानानिमंत्रोक्तानिपृथक्पृथक् ॥ २० ॥ इमंमेतन्नःसत्वन्नस्तत्वायेतिउदुत्तमम् ॥ समुद्रोत्तिसमुद्रेतित्रीन्समुद्रानितिध्रुवम् ॥ २१ ॥
दशभिर्वारुणैर्मंत्रैराहुतीनांशतद्वयम् ॥ शतमर्धशतंवापिविंशत्यष्टोत्तरंशतम् ॥ २२ ॥ गोसहस्रयुतंवापिशतंतार्धंवाप्रदीयते ॥ अलाभे
चैवगांदद्यादेकामपिपयस्विनीम् ॥ २३ ॥ अरोगांवत्ससंयुक्तांसुरूपांभूषणान्विताम् ॥ सौवर्णाराजतास्ताम्राःकांस्यासैसाःस्वशक्तितः
॥ २४ ॥ मत्स्यानक्रादयःकार्याविविधावर्तवृत्तयः ॥ गोवत्सौवत्सबद्धौतौआग्नेय्यांदिशिसंस्थितौ ॥ वायव्याभिमुखौतंत्रतारयेद्वारिम
ध्यतः ॥ २५ ॥ वस्त्रयुग्मानिविप्रेभ्योमुद्रिकाछत्रिकादयः ॥ भक्त्यातेभ्यःप्रदातव्याःप्रसाद्यायत्नतोद्विजाः ॥ २६ ॥ विप्रान्संतोष्यदे
यानिदानानिविविधान्यपि ॥ हेमपुरुषसंयुक्तांशय्यांदद्यात्स्वशक्तितः ॥ २७ ॥ आसनानिप्रशस्तानिभाजनानिनिवेदयेत् ॥ एतत्प्रद
क्षिणीकृत्यआत्मनांचविपश्चितः ॥ २८ ॥ प्रसादयेद्द्विजान्सर्वान्वांछन्पूर्तफलंनरः ॥ कृतांजलिपुटोभूत्वाविप्राणामग्रतः स्थितः ॥ २९ ॥
ब्रूयाद्देवाभवंतोत्रसर्वेविप्राधनुर्धराः ॥ तेयूयंतारयध्वंमांसंसारार्णवतोद्विजाः ॥ ३० ॥ आगताममपुण्येनपूर्तकर्मप्रसाधकाः ॥ कूर्मंचम
करंमत्स्यान्सौवर्णास्तत्रकारयेत् ॥३१॥ मीनास्तुराजतास्तत्रताम्राद्दुर्दुरकाः स्मृताः ॥ जलकुंजरगोधाश्चसैस्यांस्तत्रप्रकल्पयेत् ॥३२॥
अन्येपिजलजास्तत्रशक्तितस्तान्प्रकल्पयेत् ॥ इमंपुण्यंप्रशस्तंचतडागादिविधिंनरः ॥ ३३ ॥ वापीकूपतडागादीकारयेद्ब्राह्मणैर्बुधैः ॥
स्नानयित्वातडागादिस्वभावाच्छाठ्यवर्जितः ॥ मानवःक्रीडतिस्वर्गेयावदिंद्राश्चतुर्दश ॥ ३४ ॥ एतद्विधानंविदधातिभक्त्यास्नातेषुस

वैंषुतडागकेषु ॥ सोमुत्रकामैःपरिपूर्णदेहोभुंक्तेधरित्र्यामिहसर्वभोगान् ॥ ३५ ॥ वदंतिकेचिद्वरुणस्यलोकेप्रयांतिभोगान्वरुणस्यभुक्ते ॥
भुक्त्वाचिरंतत्रपुनर्धरित्र्यांनरेंद्रतामेतिपराशरोक्तिः ॥ ३६ ॥ ॥ इतिबृहत्पराशरीयेतडागादिप्रतिष्ठा ॥ अथातःसंप्रवक्ष्यामिद्विजें
द्राःश्रूयतामिमम् ॥ लक्षहोमविधिंपुण्यंकोटिहोमविधिंततः ॥ १ ॥ स्वयंभूर्यमुवाचप्रागस्मत्तातपितामहे ॥ तमिमंसंप्रवक्ष्यामिश्रूयतांपाप
नाशनम् ॥ २ ॥ येचेहब्राह्मणाःकार्याभूमिर्यायत्रमंडपम् ॥ याःसमिधोयेचमंत्राअन्यच्चतत्रयद्भवेत् ॥ ३ ॥ लक्षहोममिमंविप्राःकथ्यमानंनि
बोधत ॥ युग्माश्चऋत्विजःकार्याब्राह्मणायेविपश्चितः ॥ ४ ॥ नियमव्रतसंपन्नाःमहिताःपार्थिवेनतु ॥ नित्यंजपरतायेचनियोज्यास्ताह
शाद्विजाः ॥ ५ ॥ कंदमूलफलाहारादधिक्षीराशिनोपिवा ॥ प्रागुदीच्यांसमेदेशेस्थंडिलंतत्रकारयेत् ॥ ६ ॥ तत्रवेदींप्रकुर्वीतपंच
हस्तप्रमाणकम् ॥ दक्षिणोत्तरआयामेत्रिंशत्तुपूर्वपश्चिमे ॥ ७ ॥ कुंडानिखनितव्यानिअंगुलान्येकविंशतिः ॥ निधापयेद्धिरण्यंचरत्ना
निविविधानिच ॥ ८ ॥ सिकतोपरिदातव्यातत्राप्यग्निंसमिंधयेत् ॥ ग्रहांश्चैवसनक्षत्रान्दिशिप्राच्यांसमर्चयेत् ॥ ९ ॥ अवदानविधानेन
स्थालीपाकंप्रकल्पयेत् ॥ आज्यभागाहुतीहुत्वानवाहुत्याचहोमयेत् ॥ १० ॥ अग्निंसोमंतथासूर्यंविष्णुंचैवप्रजापतिम् ॥ विश्वेदेवान्म
हेंद्रंचामित्रंस्विष्टकृतंतथा ॥ ११ ॥ सदधिमधुघृतानांसमिधांचैवयाज्ञिकाः ॥ होमयेयुःसहस्रंचमंत्रैश्चैवयथाक्रमम् ॥ १२ ॥ चतुर्विंशति
गायत्र्यामानस्तोकेतिषट्तथा ॥ त्रिंशद्ग्रहादिमंत्रैश्चचत्वारिंशैश्चवैष्णवैः ॥ १३ ॥ कूष्मांडैर्जुहुयुःपंचकिरकायास्तुषोडश ॥ द्वादशस
हस्राणिजातवेदसइत्यृचा ॥ १४ ॥ पंचसहस्राण्यन्यानिजुहुयुर्यादिंद्रदेवतैः ॥ हुतेशतसहस्रेतुअभिषेकंविधापयेत् ॥ १५ ॥ पुण्याभिषेके ॥६९॥
यत्प्रोक्तंतत्प्रदाय्यंशुभंभवेत् ॥ अथषोडशभिःकुंभैःसहिरण्यैःसमंगलैः ॥ १६ ॥ सर्वौषधिसमायुक्तैर्नानारत्नविभूषितैः ॥ अभिषेकंततः

कुर्यात्स्नानमंत्रैर्यथोचितैः ॥ १७ ॥ समाप्तेतुततस्तस्मिन्प्रधानादक्षिणाःस्मृताः ॥ गजाश्वरथयानानिभूमिवस्त्रयुगानिच ॥ १८ ॥
अन्नंचगोशतंहेमऋत्विजांचैवदक्षिणाः ॥ वृषेणैकादशेनाथदातव्यादशधेनवः ॥ १९ ॥ स्वशक्तितःप्रदातव्यावित्तशाठ्यंनकारयेत् ॥
एवंकृतेतुयत्किंचिद्ग्रहपीडासमुद्भवम् ॥ २० ॥ भौममाकाशजंवापिअरिष्टंयच्चजायते ॥ तत्सर्वंलक्षहोमेनप्रशमंयातिनिश्चितम् ॥
॥ २१ ॥ शांतिर्भवतिपुष्टिश्चबलंतेजःप्रवर्धते ॥ वृष्टिर्भवतिराष्ट्रेषुसर्वोपद्रवसंक्षयः ॥ इतिबृहत्पाराशरीयेलक्षहोमविधिः ॥ ॥ अथा
तःसंप्रवक्ष्यामिकोटिहोमविधिंद्विजाः ॥ श्रूयतामादरेणैवसर्वकामफलप्रदः ॥ १ ॥ सानुष्ठानाद्विजाःप्रोक्ताऋत्विजोयागकर्मणि ॥ विधि
ज्ञाश्चैवधर्मज्ञाःस्वदारनिरताश्चये ॥ २ ॥ वरणीयाविशेषेणग्रहयागक्रियाविदः ॥ एकांगविकलोविप्रोधनधान्यापहारकः ॥ ३ ॥ सर्वां
गविकलोयस्तुयजमानंहिनस्तिसः ॥ तस्मात्सर्वप्रयत्नेनवेदांगविधिकोविदाः ॥ ४ ॥ प्रकर्तव्याविशेषेणग्रहयज्ञाविदोद्विजाः ॥ ग्रहाद
द्युःफलंनागाःशूराश्चैवनरेश्वराः ॥ अध्येताचैवमंत्राणांऋचामष्टोत्तरंशतम् ॥ ५ ॥ सएवऋत्विग्विज्ञेयःसर्वकामफलप्रदः ॥ आवाहनी
योरत्नेनप्रणिपत्यपुनःपुनः ॥ ६ ॥ एवंकृतेतुयत्किंचिद्ग्रहपीडासमुद्भवम् ॥ तत्सर्वंनाशयेद्दुःखंकृतघ्नेसौहृदंयथा ॥ ७ ॥ तस्माच्छत
गुणःप्रोक्तःकोटिहोमःस्वयंभुवा ॥ आहुतीभिःप्रयत्नेनदक्षिणाभिःफलेनवा ॥ ८ ॥ पूर्ववद्ग्रहदेवानामावाहनविसर्जने ॥ होममंत्रास्त
एवोक्ताःस्नानंदानंतथैवंच ॥ ९ ॥ मंडपस्यचवेद्याश्चविशेषंचनिबोधत ॥ कोटिहोमेचतुर्हस्तंचतुर्हस्तायतंपुनः ॥ १० ॥ योनिवक्रद्वयोपेतं
तदप्याहुस्त्रिमेखलम् ॥ द्व्यंगुलेनोच्छ्रिताकार्याप्रथमामेखलाबुधैः ॥ ११ ॥ त्र्यंगुलेनोच्छ्रितातद्वद्द्वितीयामेखलास्मृता ॥ तृतीयामे
खलायातुउच्छ्रायेचतुरंगुला ॥ १२ ॥ द्व्यंगुलस्तत्रविस्तारःपूर्वयोरेवशस्यते ॥ वितस्तिमात्रायोनिःषडंगुलात्सुतांगुलिविस्तृता ॥ १३ ॥

कूर्मपृष्ठोच्छ्रितामध्येपार्श्वतश्चांगुलोच्छ्रिता ॥ गजोष्ठसदृशातद्वदायता...
त्सर्वेषुकुंडेषुयोनिलक्षणमीरितम् ॥ १५ ॥ वेदीचकोटिहोमेस्याद्वितस्तीनांचतुष्टयम् ॥ चरतुस्रासमातद्वत्त्रिभिर्वप्रैःसमावृता ॥ १६ ॥
वप्रप्रमाणंपूर्वोक्तंवेदिकायास्तथोच्छ्रयः ॥ ततःषोडशहस्तःस्यान्मंडपश्चचतुर्मुखः ॥ १७ ॥ पूर्वद्वारेचसंस्थाप्यबह्वृचंवेदपारगं ॥
यजुर्वेदंतथायाम्येपश्चिमेसामवेदिनम् ॥ १८ ॥ अथर्ववेदिनंतद्वदुत्तरेस्थापयेद्बुधः ॥ होमेष्टौब्राह्मणाःकार्यावेदवेदांगवेदिनः ॥ १९ ॥
एवंद्वादशविप्रास्तेवस्त्रमाल्यानुलेपनैः ॥ पूर्ववत्पूजयेद्भक्त्यासर्वांगाभरणैर्द्विजान् ॥ २० ॥ रात्रिसूक्तंस्वसौरंचपावमानंचमंगलम् ॥ पू
र्वतोबह्वृचःशांतिपावमानमुदङ्मुखम् ॥ २१ ॥ सूक्तंरौद्रंचसौम्यंचकूष्मांडैःशांतिमेवच ॥ पाठयेद्दक्षिणद्वारेयजुर्वेदिनमुत्तमम् ॥ २२ ॥
सौपर्णमथवैराजमाग्नेयींरुद्रसंहितां ॥ ज्येष्ठसामतथाशांतिछंदोगःपश्चिमेपठेत् ॥ २३ ॥ शांतिसूक्तंचसौरंचतथाचसपवनंशुभम् ॥ पौ
ष्टिकंचैवहाराज्यमथर्वोत्तरतोजपेत् ॥ पंचभिःसप्तभिर्वाथहोमःकार्यस्तुपूर्ववत् ॥ २४ ॥ स्नानेदानेचयेमंत्रास्तएवद्विजसत्तमाः ॥ वसो
र्धाराविधानंतुलक्षहोमेतदिष्यते ॥ २५ ॥ अनेनविधिनायस्तुग्रहपूजांसमाचरेत् ॥ सर्वान्कामांश्चिरंभुक्त्वाअंतेविष्णुपुरंव्रजेत् ॥ २६ ॥
यःपठेच्छृणुयाद्वापिग्रहयोगमिमंनरः ॥ सर्वपापविनिर्मुक्तःसगच्छेद्वैष्णवंपदम् ॥२७॥ अश्वमेधसहस्राणिदशचाष्टौचमानवः ॥ कृत्वायत्फ
लमाप्नोतिकोटिहोमात्तदश्नुते ॥ २८ ॥ ब्रह्महत्यासहस्राणिभ्रूणहत्यार्बुदानिच ॥ नश्यंतिकोटिहोमेनस्वयंभूवचनंयथा ॥ २९ ॥ प्रपेदिरेय
स्यापितामहाद्याःश्वभ्राणिपापेनगरीयसातान् ॥ उद्धृत्यनाकंसनयेद्धिसर्वान्यःकोटिहोमंनृपतिःकरोति ॥ ३० ॥ राष्ट्रंममोवांछितवृष्टियुक्तं
धान्यैरनंतैःपशुभिःसमेतम् ॥ निर्द्वंद्वनीरोगमदस्युतस्ययोलक्षकोट्योर्हवनंविदध्यात ॥ ३१ ॥ योलक्षहोमंविदधातिभूभृत्तद्वन्नरोलक्षशतं

जुहोति ॥ प्रत्यब्दमाप्नोतिसदीर्घमायुर्भुंक्तेसपत्नान्विजयेद्धरित्रीं ॥ ३२ ॥ सोब्रह्मघातीगुरुदारगामीग्रामादिदाहाद्भुवपापयुक्तः ॥ पापै
रशेषैःपुरुषोविमुक्तःसकोटिहोमाद्विबुधत्वमेति ॥ ३३ ॥ तस्मात्तदाभूपतयोविदध्युर्वृष्टिप्रजासौख्यबलस्यगुप्त्यै ॥ आयुःप्रवृद्ध्यैविजया
यकीर्त्यैलक्षादिहोमंग्रहयागमनम् ॥ ३४ ॥ ॥ इतिबृहत्पराशरीयेकोटिहोमविधिः ॥ ॥ अथान्यंसंप्रवक्ष्यामिविधिंपावनमुत्तमम् ॥ अ
स्मत्तातप्रभावोयंरघुपौत्रस्यधीमतः ॥ १ ॥ अनपत्यस्यपुत्रार्थंचक्रेवैभांडकस्तुयम् ॥ सहस्रशीर्षसूक्तस्यविधानंचरुपाककृत ॥ २ ॥ यै
र्यैर्नृपैःकृतंपूर्वमन्यैरपिद्विजोत्तमैः ॥ सिध्यंतिसर्वमंत्राणिविधिविद्भिर्द्विजोत्तमैः ॥ ३ ॥ उपासितानितद्भक्त्याश्रोत्रियैःश्रुतिपारगैः ॥ आत्म
विद्भिर्निराहारैर्व्रतिभिर्मंत्रवित्तमैः ॥ ४ ॥ क्रियमाणाःक्रियाःसर्वाःसिध्यंतिव्रतचारिभिः ॥ नपाठान्नधनात्स्नानान्नात्मनःप्रतिपादनात् ॥
॥ ५ ॥ प्राक्तनात्कर्मणांपुंसांसर्वाःसिध्यंतिसिद्धयः ॥ शुक्लपक्षेशुभेवारेशुभनक्षत्रगोचरे ॥ ६ ॥ द्वादश्यांपुत्रकामोयंचरुंकुर्वीतवैष्णव
म् ॥ दंपत्योरुपवासःस्यादेकादश्यांशिवालये ॥ ऋग्भिःषोडशभिःसम्यगर्चयित्वाजनार्दनम् ॥ ७ ॥ चरुंपुरुषसूक्तेनश्रपयेत्पुत्रका
म्यया ॥ प्राप्नुयाद्वैष्णवंपुत्रंचिरायुःसंततिक्षमम् ॥ ८ ॥ द्वादश्यांद्वादशचरून्विधिवन्निर्वपेद्द्विजः ॥ यःकरोतिमहायागंविष्णुलोकं
सगच्छति ॥ ९ ॥ हुत्वाज्यंविधिवत्पूर्वमृग्भिःषोडशभिस्तथा ॥ समिधोऽश्वत्थवृक्षस्यहुत्वाज्यंजुहुयात्पुनः ॥ १० ॥ उप
स्थानंततःकुर्याद्ध्यात्वातुमधुसूदनम् ॥ हविर्होमंततःकृत्वादद्यात्पंचघृताहुतीः ॥ ११ ॥ कामप्रदंनमस्कृत्यनारीनारायणंप्रति
संप्राप्यचहविःशेषंवसेल्लब्ध्वशनीगृहे ॥ १२ ॥ विधिमेतंततःकृत्वाकर्तव्यंद्विजतर्पणम् ॥ अन्यस्त्रीषुनिवर्तेतयावद्गर्भंनविंदति ॥
॥ १३ ॥ अप्रसूतांमृतापत्यायायाचकन्याप्रसूर्भवेत् ॥ क्षिप्रंसाजनयेत्पुत्रंपराशरवचोयथा ॥ १४ ॥ होमांतेदक्षिणांदद्याद्धेमंवासांसि

लान्वसु ॥ भूमिंहिरण्यंरत्नानियथासंभवमेवच ॥ १५ ॥ यःसिद्धमंत्रःसततंद्विजेंद्रःसंपूज्यविष्णुंविधिवत्सुतार्थी ॥ इदंविधानंविदधातिस
म्यक्सपुत्रमाप्नोतिहरिप्रसादात् ॥ १६ ॥ ॥ इतिबृहत्पाराशरीयेपुत्रार्थंपुरुषसूक्तविधानम् ॥ ॥ अथातःसंप्रवक्ष्यामिग्रहमंत्राधिदैव
तम् ॥ आर्षछंदश्चयज्ज्ञानात्कर्मस्यात्सफलंकृतम् ॥ १ ॥ आकृष्णेनेतिमंत्रेस्मिन्दैवत्यंसवितामहत् ॥ ऋषिर्हिरण्यस्तूपाख्यस्त्रिष्टुप्छंदः
प्रकीर्तितम् ॥ २ ॥ आप्यायस्वेतिसोमश्चदैवतंगौतमोमुनिः ॥ गायत्रीछंदउद्दिष्टंविनियोगोयथेप्सितम् ॥ ३ ॥ अग्निर्मूर्धेतिमंत्रेणदैवत्यंभौ
मउच्यते ॥ विरूपाक्षोमुनिर्धीमांश्छंदोगायत्रमुच्यते ॥ ४ ॥ उद्बुध्यस्वेतिमंत्रस्यबुधोदैवतमीरितम् ॥ मुनिर्बुधोपिमंतव्यस्त्रिष्टुप्छंदःप्रकी
र्तितम् ॥५॥ बृहस्पतेअतीत्यस्यदेवतापिबृहस्पतिः ॥ आर्षगृत्समदोस्येतिछंदस्त्रिष्टुप्प्रकीर्तितम् ॥ ६ ॥ शुक्रत्वमितिह्येत्यत्रशुक्रइत्यधिदैव
तम् ॥ शुक्रश्चापितथार्षंचविराट्छंदःप्रकीर्त्यते॥७॥शन्नोदेवीरितिह्यत्रशनिर्दैवतमुच्यते॥सिंधुनामऋषिर्दिष्टश्छंदोगायत्रमुच्यते॥ ८ ॥कां
डात्कांडादितिराहुर्दैवतंहितदुच्यते ॥ ऋषिःप्रजापतिःप्रोक्तोनुष्टुप्छंदःप्रकीर्तितम् ॥ ९ ॥केतुंकृण्वन्नितिप्रोक्तंदैवतंकेतुरेवहि॥मधुच्छंदस
मार्षंचगायत्रंछंदएवहि॥ १०॥ स्योनापृथिवीतिमंत्रस्यस्कंदश्चदेवतास्मृता ॥ आर्षमेधातिथिश्चात्रस्वयंभूर्दैवतंपरम्॥११॥गर्भाख्यश्चमुनि
श्चात्रबृहतीछंदउच्यते॥इंद्रकुत्सेतिदैवत्यइंद्रएवस्मृतोबुधैः॥ १२ ॥आर्षं तुकुत्सश्चामुत्रत्रिष्टुप्छंदःप्रकीर्तितम्॥यस्मिन्नृक्षेतिवाह्यत्रयमोवैदे
वतास्मरः॥१३॥ऋषिस्तुकुल्मलोनामत्रिष्टुप्छंदःस्मरेद्बुधः ॥ ब्रह्मजज्ञानमित्यत्रकालोवैदेवतंमहत् ॥ १४ ॥मनुधर्मतनुर्नामत्रिष्टुप्छंदोविधी
यते॥आयातमितिमंत्रस्यचित्रगुप्तस्तुदैवतम् ॥१५॥ आर्षंतुवामदेवश्चात्रिष्टुप्छंदोबुधैःस्मृतम् ॥ अग्निर्दूतमितिह्यस्यअग्निर्वैदेवतास्मृता ॥
॥ १६ ॥ आर्षंमेधातिथिर्नामछंदोगायत्रमेवहि ॥ आप्समेसोमइत्यत्रसोमोवैदेवतंस्मरेत् ॥ १७ ॥ मेधातिथिरिहाप्यार्षमनुष्टुप्छंदइ

ष्यते ॥ भूमेःपृथिव्यंतरिक्षमित्यत्रदैवतंक्षितिः ॥ ऋषिःशातातपःप्रोक्तश्छंदोनुष्टुप्तथोच्यते ॥ १८ ॥ पुरुषसूक्तस्यदैवत्यंपुरुषएव
मतंबुधैः ॥ आर्षंनारायणोस्तीहछंदश्चानुष्टुबित्यपि ॥ १९ ॥ इन्द्रायेंदोमरुत्वतेमरुत्वान्दैवतंमहत् ॥ आर्षंतुकश्यपश्चेहगायत्रंछंदएवहि ॥
॥ २० ॥ मरुत्वंतमितिह्यत्रसुरेंद्रोदेवतामता ॥ अत्रापिकश्यपार्षंचगायत्रंछंदएवहि ॥ २१ ॥ उत्तानपर्णइत्यत्रइंद्रोदैवतमुच्यते ॥ आर्षं
तुसांख्यश्चात्रोक्तमनुष्टुप्छंदइत्यपि ॥ २२ ॥ प्रजापतेइतिह्यत्रदेवताचप्रजापतिः ॥ हिरण्यगर्भश्चार्षंतुत्रिष्टुप्छंदस्मृतंबुधैः ॥ २३ ॥
आयंगौरितिचैवात्रदेवताफणिनोमताः ॥ सर्पराजोमुनिस्तत्रगायत्रंछंदउच्यते ॥ २४ ॥ एषब्रह्मात्रऋत्विजेतिब्रह्मादैवाधिदेवतम् ॥ ऋ
षिर्वैवामदेवोत्रगायत्रंछंदइष्यते ॥ २५ ॥ आतूनइंद्रवृत्रहन्सुरेंद्रःसगणेश्वरः ॥ तथार्षंवामदेवोस्यगायत्रंछंदइत्यपि ॥ २६ ॥ जातवेद
सइत्यत्रजातवेदास्तुदेवता ॥ काश्यपश्चार्षमत्रापिछंदस्त्रिष्टुप्प्रकीर्तितम् ॥ २७ ॥ आनोनियुद्भिरित्यस्मिन्दैवतंवायुरुच्यते ॥ आर्षं
मत्रवसिष्ठश्चअनुष्टुप्छंदउच्यते ॥२८॥ आदावाकाशदैवत्यंमुनिःप्रोक्तःप्रजापतिः॥छंदोगायत्रमित्युक्तंविनियोगोयथेप्सितम् ॥२९॥ एषोउषे
तिचाप्यत्रअश्विनौदेवतेस्मरेत् ॥ प्रस्कण्वश्चार्षमत्रापिछंदोगायत्रमुत्तमम् ॥ ३० ॥ मरुतोयस्यहिक्षयेमरुद्दैवत्यमुच्यते ॥ गौतमंच
मुनिंविद्धिछंदश्चप्रथमंमुने ॥ ३१ ॥ छंदस्तथार्षसहदैवतेनज्ञात्वाद्विजोयःकुरुतेविधानम् ॥ वेदोक्तअर्थंप्रददातिसम्यक्सर्वंफलंकर्तुरिहाप्य
मुत्र ॥३२॥ योलक्षहोमंयदिकोटिहोमंराजाविदध्यात्प्रतिवर्षमेकम् ॥ राष्ट्रेभिवृष्टिर्विजयःसुभिक्षमारोग्यतास्यात्सुकृतस्यवृद्धिः ॥ ३३ ॥
भवंतिपुत्राःशुभवंशवृद्ध्यैदीर्घायुषोराज्यधराधरित्र्याः ॥ सत्कीर्तिमंतोबलविक्रमाढ्याःप्रतापवंतोरविचंद्रतुल्याः ॥ ३४ ॥ ॥ इतिबृह
त्पाराशरीयेधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांशांतिविधाननिर्णयोनामनवमोऽध्यायः ॥ ९ ॥ ॥ अथातोनृपतेर्धर्मंवक्ष्यामिहिताकाम्यया

पराशराच्छ्रुतंविप्रावक्ष्यमाणंनिबोधत ॥ १ ॥ भूभृद्धर्मोपरोदेवःपूज्योसौपरदेववत् ॥ सविधाताहिसर्वस्यरक्षिताशासिताचसः ॥
॥ २ ॥ इंद्राग्नियमवित्तेशजलेशमातरिश्वनाम् ॥ शीतांशोरीशानमात्रश्चब्रह्मादयोऽसृजन्नृपम् ॥ ३ ॥ नृपोवेधानृपःशंभुर्नृपोऽर्को
विष्टरश्रवाः ॥ दाताहर्तानृपःकर्तानृणांकर्मानुसारतः ॥ ४ ॥ नासृक्षद्यदिराजानंनापिदंडंविधास्यते ॥ नमंस्यन्तौयदाचैषाकाभ
विष्यज्जगत्स्थितिः ॥ ५ ॥ नाग्रहीष्यन्पुरोडाशान्मनुष्यपितृदेवताः ॥ अभविष्यच्चकाकानांपावनंयच्छ्रुतंहविः ॥ ६ ॥ निर्गुणोपिय
थास्त्रीणांसदापूज्यःपतिर्भवेत् ॥ तथाराजापिलोकानांपूज्यःस्याद्विगुणोपिसन् ॥ ७ ॥ स्वकर्मस्थान्स्मोलोकान्पातिपुत्रानिवौरसान् ॥
शिक्षयेद्धर्मविद्दंडैरधर्मकारिणोजनान् ॥ ८ ॥ नरान्दंडधृतःकुर्याद्धर्मज्ञानार्थसाधकान् ॥ समर्थानश्वपत्यादीन्शूरान्स्वामिहितेप्यतान् ॥
॥ ९ ॥ शुचीन्प्राज्ञान्स्वधर्मज्ञान्विप्रान्मुद्राकराहितान् ॥ लेखकानपिकायस्थाल्लेख्यकृत्यविचक्षणान् ॥ १० ॥ अमात्यान्मंत्रिणो
दूतान्यथोदितपुरोहितान् ॥ प्राड्विवाकान्सभास्तारान्हितानांरक्षकानपि ॥ ११ ॥ शूरानाढ्याञ्छुचीन्प्राज्ञान्परविश्वासकारिणः ॥
सर्वस्थानेषुचाध्यक्षांस्तत्कृत्यवेदिनःपरे ॥ १२ ॥ महायत्नाःकुमाराणामंतःपुरस्यरक्षणे ॥ वृद्धान्कंचुकिनोविप्राञ्छुचीनाढ्यांश्चभीरु
कान् ॥ १३ ॥ यथोदितानिदुर्गाणिकुर्यात्तेष्वपिरक्षणम् ॥ उद्वाहमुदितंस्त्रीणांयौनसंबंधकारणात् ॥ १४ ॥ धुंगुप्तकृत्यविज्ञानमा
त्मरक्षाप्रयत्नतः ॥ प्रातःसंध्यार्चनादूर्ध्वंगूढपुंवचनश्रुतिः ॥ १५ ॥ यथोक्तकार्यैराज्येचनित्यंकुर्यात्परीक्षणम् ॥ कोशेभाश्व
रथादीनांहेतीनांचर्मणामपि ॥ १६ ॥ कुर्यादालोकनंनित्यमनालस्योमहीपतिः ॥ अमात्यमंत्रियोक्ताणांसंमानंनित्यशोपिच ॥ १७ ॥
देवार्चनंसदाहोमःशांतिकंवृद्धसेवनम् ॥ यज्ञेदानंतथोत्पातशमनायाथशांतये ॥ १८ ॥ वर्जनंविषयासक्तेर्भूमिदानंस्वशासनम् ॥ प्राणि ॥७२

वर्जितदेशेचनीतिज्ञोमंत्रकृद्भवेत् ॥१९॥ नित्यमुत्साहयुक्तश्चविजिगीषुरुदायुधः ॥ सदालंकारयुक्तस्तुसदैवप्रियभाषकः ॥२०॥ सदाप्रदा
हितेयुक्तःपूज्योनाकेप्यसौनृपः ॥ सदासाधुषुसंमानंविपरीतेषुघातनम् ॥ २१ ॥ दंडंदंडयेषुकुर्वाणोसम्रायक्षफलंलभेत् ॥ वृद्धान्सा
धून्द्विजान्मौलान्योनसंमानयेन्नृपः ॥ पीडांकरोतिचामीषांराजाशीघ्रंक्षयंव्रजेत् ॥ २२ ॥ यस्तुसंमानयेद्देवान्नित्यंविप्रांश्चपूजयेत् ॥
पराजयेतसोरातीन्दीर्घायुरपिजायते ॥ २३ ॥ पीड्यमानांप्रजांरक्षेत्कायस्थैश्चाटुतस्करैः ॥ धान्येक्षुतृणतोयैस्तुसंपन्नंपरमंडलम् ॥
॥ २४ ॥ हीनवाहनयुक्तंचमत्वैतत्प्रविशेन्नृपः ॥ मासेसहसियात्रार्थीकृतपुण्याहघोषवान् ॥ २५ ॥ प्रयाणंविधिवत्कुर्यात्सद्व्यूहैरक्षय
न्बलम् ॥ यत्रान्नलसरिद्रक्षावृक्षरक्षाचयत्रतु ॥ २६ ॥ तत्रावासंविधायैवरात्रौरक्षेत्स्वयंबलम् ॥ चतुर्दिक्षुचसैन्यस्यानिर्शिशूरान्ध
नुर्धरान् ॥ स्वयंराजानियुंजीतसमीक्ष्यंभूबलाबलम् ॥ २७ ॥ राज्यस्यषड्गुणान्मत्वासंधिविग्रहयानकान् ॥ आसनंसंश्रयंद्वैधंसम्य
ग्ज्ञात्वासमाचरेत् ॥ २८ ॥ निर्भेदंस्वबलंकुर्यान्नहन्याद्भूतवेतनम् ॥ दासीःकर्मकरान्दासान्भिन्दतोरक्षयेन्नृपः ॥ २९ ॥ निकट
स्थायिनोनित्यंजानन्तेचेष्टितंप्रभोः ॥ तस्मात्तेयत्नतोरक्ष्याभेदमूलंयतस्त्वमी ॥ ३० ॥ एतेपरस्ययत्नेनभेदनीयास्ततोपरे ॥ यथा
परोनजानातितंथाभेदंसमाचरेत् ॥ ३१ ॥ परामात्यप्रधानानांव्यलीकंशब्ददूषितम् ॥ उत्थापयेत्थापनायाःस्याद्यथाचित्तभेदना ॥
॥ ३२ ॥ परसैन्येबहुगतान्विक्ष्यान्कुहकानपि ॥ कारयेद्गरदानादिवह्निपातामनेकशः ॥ ३३ ॥ स्वसैन्येगरदानादेर्नृपोयत्नेनरक्षये
त् ॥ नियुज्यविज्ञपुरुषान्कृत्यंसर्वंनिशामयेत् ॥ ३४ ॥ अंतर्भीरून्बाहिःशूरान्साकारान्ब्राह्मणोत्तरान् ॥ धर्मज्ञान्कुलसंपन्नान्विभृया
दात्मसंनिधौ ॥ ३५ ॥ प्रविशन्परदेशेचप्रजाःस्वींकृत्यसंविशेत् ॥ उत्सार्यागतोलोकान्दूरीकृत्यव्रजेन्नृपः ॥ ३६ ॥ सस्या

दिदाहयेत्सर्वंयवसान्नींधनानिच ॥ भिंद्यात्सर्वंनिपानानिप्राकारपरिखास्तथा ॥ ३७॥ अपसृत्यसमादायभूमिसाधरणंनृपः ॥ गमयेद्वा
७३॥ र्षिकान्मासानासाद्यस्वधरांनृपः ॥ ३८ ॥ नयुद्धमांश्रयेद्राजानकुर्यात्स्वबलक्षयम् ॥ साम्नाभेदेनदानेनत्रिभिस्स्ववशंनयेत् ॥ ३९ ॥ अ०
वदंतिसर्वंनीतिज्ञादंडस्त्वगतिकामतिः ॥ तद्राज्यंवशमायातियथाशत्रुस्तथाचरेत् ॥ ४० ॥ आक्रांत्यादर्भसूच्योपिभिंद्युर्मृध्योपिभूत
लम् ॥ नातोयतेतयुद्धाययुद्धसिद्धिरसिद्धिवत् ॥ ४१ ॥ स्वधामात्यंतिकेदेशेयुद्धमिच्छेत्स्वधर्मवित् ॥ नतुप्रविश्यतद्दूरेभूमियुद्धं १०
समाचरेत् ॥ ४२ ॥ किंचित्सुप्तेषुलोकेषुक्षपायांयुद्धमाचरेत् ॥ सुधीरव्यसनंचापियोधयेत्परसैनिकान् ॥ ४३ ॥ व्यूहैर्व्यूह्ययथो
क्तैर्वारक्षाम्मरोप्यचात्मनः ॥ सैनिकांस्तान्समस्तांश्चप्रेरयेद्युद्धविन्नृपः ॥ ४४ ॥ संमानयेत्समस्तांश्चयोधान्सेनापतीन्नृपः ॥ अन्विच्छञ्ज
यलक्ष्मींचनीतिज्ञःपृथिवीपतिः ॥ ४५ ॥ स्नेहेनापिसमंपत्न्याशय्यास्थोपिहिमानवः ॥ पुष्पैरपिनयुध्येतयतोयुद्धंविपत्तये ॥ ४६ ॥
हीनंपरबलंमत्वानिरुत्साहमनादरम् ॥ समस्तबलसंयुक्तःस्वयमुत्थाप्ययोधयेत् ॥ ४७ ॥ नहन्यान्मुक्तकेशंचनासीनंननिरायुधम् ॥
पराङ्मुखंनपतितंनतवास्मीतिवादिनम् ॥ ४८ ॥ अन्यानपिनिषिद्धांश्चनहन्याद्धर्मविन्नृपः ॥ हत्वाचनरकंयातिभ्रूणहत्यासमैनसा ॥४९॥
पराङ्मुखीकृतेसैन्येयोयुद्धायनिवर्तते ॥ पदानिक्रतुतुल्यानिभूम्यर्थंस्वामिनोपिवा ॥५०॥ शिरोहवस्यवक्त्रेयेविशंतिरक्तबिंदवः ॥ सोमपा
नेनतेतुल्याइतिवासिष्ठजोब्रवीत् ॥५१॥ युध्यंतेभूभृतोयेतुभूम्यर्थंचैकचेतसः ॥ इष्टैस्तैर्बहुभिर्यागैरेवयांतित्रिविष्टपम् ॥५२॥ एषएवपरोध
र्मोनृपतेर्यद्रणार्जितम् ॥ विप्रेभ्योदीयतेवित्तंप्रजाभ्यश्चाभयंतथा ॥५३॥ यदातुवशमायातिसदेशोन्यायतोर्जितः ॥ तद्देशव्यवहारेणयथाव ॥७३॥
त्परिपालयेत् ॥ ५४ ॥ रणार्जितेनवित्तेनराजाकुर्यान्मखान्द्विजान् ॥ अर्चयेद्विधिवद्राजासाधून्संमानयेदपि ॥ ५५ ॥ मातुलंश्वशुरोबं

धुरन्योवापिहियोर्चितः॥अदंड्यःकोपिनास्त्येवराज्ञांनीतिविदोविदुः॥५६॥ सुसहायमतिप्रौढंशूरंप्रज्ञानुरागदम्॥सोत्साहंविजिगीषुंचमत्वा
राजानियामयेत्॥५७॥मत्वाचार्थवतःसर्वानयुक्तानर्थहृद्भवेत् ॥ सार्थकांश्वनियुंजीतसर्वथार्थमुपार्जयेत् ॥ ५८ ॥ सर्वाण्यपिहिवित्तानिनियत
स्ततोपिराजनि ॥ प्रविशंत्येवतोयानियथासर्वाणिसागरे ॥ ५९ ॥ नृपश्चापदिजातायांदेवद्रव्याणिकोशवत् ॥ आदायरक्षेदात्मानंपुनस्त
त्रचनिक्षिपेत् ॥ ६० ॥ वित्तंवार्धुषिकाणांचकदर्यस्यापियद्धनम् ॥ पाखंडिगणिकावित्तंहरन्नार्तोनकिल्बिषी ॥ ६१ ॥ देवब्राह्मणपाखं
डिगायकागणकादयः ॥ वणिग्वार्धुषिकाःसर्वेस्वस्थेराजनिसुस्थिताः ॥ ६२ ॥ यथावह्निश्वगोमांसंदहन्नपिनपातकी ॥ आददानस्तथा
राजाधनमार्तोनकिल्बिषी ॥ ६३ ॥ गृह्णीयात्सर्वदाराजाकरान्योऽपीडयन्प्रजाः ॥ स्तोकेस्तोकान्पृथक्स्यान्नसभुंक्तेसुचिरंधराम् ॥
॥६४॥ सदाचोद्यमिनाभाव्यंनृपेणविजिगीषुणा ॥ विजिगीषुर्नृपोनान्यैःकदाचिदभिभूयते ॥६५॥ तदेवहृदिसंधार्यनिरुत्साहोनृपोभवेत् ॥
दैवपौरुषसंयोगेसर्वाःसिध्यंतिसिद्धयः ॥ ६६ ॥ नैकेनचक्रेणरथःप्रयातिनचैकपक्षोदिवियातिपक्षी ॥ एवंहिदैवेनकेवलेनपुंसोर्थसिद्धिर्नर
कारतोवै ॥ ६७॥ केचिद्धिदैवस्यनकेवलस्यप्राधान्यमिच्छंतिविधिप्रणीताः ॥ पुंस्कारयुक्तस्यनरस्ययेकेचिद्दप्यंत्रदृष्टापुरुषार्थसिद्धिः॥६८॥
अत्युद्यमीचकृतहेतिपरिश्रमीचशौर्यान्वितश्चगुणवांश्चसुधीश्वविद्वान् ॥ प्राप्नोतिनैवविधिनासपराङ्मुखेनस्वीयोदरस्यपरिपूरणमन्नमात्र
म् ॥ ६९ ॥ शुभ्राणिहर्म्यांगवरांगनानांनानाप्रकारोविभवोनरस्य ॥ उर्वीपतित्वंनृपकारताचसर्वंहिमंक्षुक्षयमेतिदैवात् ॥ ७० ॥ के
षांहिपुंसामकुतोपिदैवात्स्थानस्थितानामपिचार्थसिद्धिः ॥ केषांप्रभुत्वंवहुजीविकंचएकोपिदैवोबलवानतोत्र ॥ ७१ ॥ पुंस्त्रीप्रयोगाद
थशुक्रशोणात्कोदेहमध्येविदधातिगर्भम् ॥ स्त्रीणांहितंविप्रनचापिपुंसांसर्वापिचैषाननुदैवचेष्टा ॥ ७२ ॥ कासांतुगर्भस्यनसंभवोस्ति

 

केषांचशुक्रंननुवीर्यहीनम् ॥ दधातिगर्भंकचदैवयोगात्काचित्तुगर्भंनदधातिदैवात् ॥ ७३ ॥ धाताविधातानिजकर्मयोगाद्विधिस्त्वदृष्टस्त्वनुभाव्यभाव्यः ॥ देवोरगाणांचतदेवसाम्यंसह्येककर्ताचमनूद्भवानाम् ॥ ७४ ॥ दैवान्मवोनोपिसहस्रदृक्कंदेवाद्धिमांशोःक्षयगामित्वभूत् ॥ दैवात्पयोधेर्लवणोदकत्वंदैवाद्भवेच्चित्रतराचवृष्टिः ॥ ७५॥ यद्यप्यमुष्मान्नपरोस्तिदेवात्कुर्यात्तथापीहनसेनृकारम् ॥ संदीपयेत्कर्मनरोनृकारादुद्दीपितंकर्मतनोतिलक्ष्मीम् ॥ ७६ ॥ दैवेनकेचित्प्रसभेनकेचित्केचिन्नृकारेणनरस्यचार्थाः ॥ सिध्यंतियत्नेनविधीयमानास्तेषांप्रधानंनरकारमाहुः ॥ ७७ ॥ स्वामिप्रधानप्रजदुर्गकोशादंडंचमित्राणिचनीतिविज्ञाः ॥ अंगानिराज्यस्यवदंतिसप्तसप्तांगयुक्तोनृपतिर्महीभुक् ॥७८॥ दुर्वृत्तसद्वृत्तनरेषुदंडंराजाविधत्तेनिपुणोर्थसिद्ध्यै ॥ दंडस्यमत्वोर्जितवित्तसत्त्वंपुंसोर्थहीनस्यबलंतुहीनम् ॥७९॥ अन्यायतोयेतुजनंनरेशाःसंपीड्यवित्तानिहरंतिलोभात् ॥ तत्क्रोधवह्नौपरिदग्धदेहागतायुपस्तेपिभवंतिभूपाः ॥ ८० ॥ दंडोमहान्मध्यमकन्यकस्तुमानंतुतस्यत्रसरेणुकादिः ॥ सोशीतिसाहस्रपणोमहान्स्यादर्धार्धकोतस्यतदन्यकौच ॥८१॥ सर्वार्थपादश्चहरश्चदंडौमात्यैर्नृपणेतिवदंतिसंतः ॥ पाण्यंघ्रिविच्छेदनमारणंचनिर्वासनंराष्ट्रतएवसद्यः ॥ ८२ ॥ ज्ञात्वापराधंमनुजस्ययस्तुदेशंचकालंचवपुर्वयश्च ॥ दंड्येषुदंडंविदधातिभूभृत्साम्यंसवभ्राजिपुरंदरस्य ॥८३॥ यःशास्त्रदृष्टेनपथानरेशोदंडंविदध्याद्विधिवत्करांश्च ॥ सोतीवकीर्तिंवितनोतिगुर्वीमायुश्चदीर्घंदिविदेवभोगान् ॥८४॥ यस्त्यक्तमार्गाणिकुलानिराजाश्रेणीश्चजातीश्चगुणांश्चलोकान्॥आनीयमार्गैविदधातिधर्मौनाकेपिगीर्वाणगणैःप्रशस्यः ॥ ॥८५॥हर्यश्ववह्नियमवित्तनाथशीतांसुरूपाणिहिबिभ्रतीह॥सर्वेपिभूपास्त्विहपंचरूपास्तत्कथ्यमानंशृणुतद्विजेंद्राः ॥ ८६ ॥यदाजिगीषुर्धृतशस्त्रपाणिस्त्ववपुंसमालंब्यसचिह्नसैन्यः ॥ सर्वान्सपत्नानिहजेतुकामस्तदासहर्यश्वइवेहभाति ॥ ८७ ॥ अकारणात्कारणतोपिचैषप्रजां

दहेत्कोपसमिद्धरोचिः ॥ यदातदैनंनृपतीतिविज्ञास्तनूनपादंप्रवदंतिरूपम् ॥ ८८ ॥ धर्मासनस्थःश्रुतिशास्त्रदृष्टंचाशुभाशुभाचारविचा
रकृत्स्यात् ॥ धर्मेषुदानंत्वघकृत्सुदंडंतदावनीशस्त्विहधर्मराजः ॥ ८९ ॥ यदात्वनात्यद्विजयाचकादीन्प्रहृष्टचित्तस्तुयथोचितेन ॥
धनप्रदानेनकरोतिहृष्टान्भूभृत्तदासौद्रविणेशवत्स्यात् ॥ ९० ॥ समस्तुशीतांशुगुणप्रयुक्तांयदाप्रजामेशशुभायपश्येत् ॥ प्रसन्नमूर्तिर्ग
तमत्सरःसंस्तदोच्यतेसोमइवाक्षितीशः ॥ ९१ ॥ आज्ञानृपाणांपरमंहितेजोयस्तांनमन्येतसशस्त्रवध्यः ॥ ब्रूयाच्चकुर्याच्चवदेच्चभूभृत्कार्यं
तदेवंभुविसर्वलोकैः ॥ ९२ ॥ दुर्धर्षतिग्मांशुसमानदीप्तेर्ब्रूयान्मनुष्यःपरुषंनृपस्य ॥ यस्तस्यतेजोप्यवमन्यमानःसद्यःसपंचत्वमुपैति
पापात् ॥ ९३ ॥ योह्यायंसर्वंविदधातिपश्यच्छृणोतिजानातिचकास्तिशास्ति ॥ कस्तस्यचाज्ञांनविभर्तिराज्ञःसमस्तदेवांशभवोहिय
स्मात् ॥ ९४ ॥ यःस्वधर्मेस्थितोराजाप्रजाधर्मेणपालयेत् ॥ सर्वकामसमृद्धात्माविष्णुलोकमवाप्नुयात् ॥ ९५ ॥ इतिबृहत्पाराशरीयेरा
जधर्मः ॥ ॥ अथविप्रोवनंगच्छेद्दिनावासहभार्यया ॥ जितेंद्रियोवसेत्तत्रनित्यंश्रौताग्निकर्मकृत् ॥ १ ॥ वन्यैर्मुन्यशनैर्मेध्यैःश्यामनी
वारकंगुभिः ॥ कंदमूलंफलैःशाकैःस्नेहैश्चफलसंभवैः ॥ २ ॥ सायंप्रातश्चजुहुयात्त्रिकालंस्नानमाचरेत् ॥ चर्मचीवरवासाःस्यात्श्मश्रु
लोमजटाधरः ॥ ३ ॥ पितॄंश्चतर्पयेन्नित्यंदेवांश्चाजस्रमर्चयेत् ॥ अर्चयेदतिथीन्नित्यंतथाभृत्यांश्चपोषयेत् ॥ ४ ॥ नकिंचित्प्रतिगृह्णीयात्स्वा
ध्यायंनित्यमाचरेत् ॥ सर्वसत्त्वहितेप्सितोदांतश्चाध्यात्मचिंतकः ॥ ५ ॥ संतुष्टस्वांतकोनित्यंदानशीलःसदाद्विजः ॥ कंचिद्वेदंसमास्थायतद्वृत्त्या
वर्तयेत्सदा ॥ ६ ॥ एकाहिकंतुकुर्वीतमासिकंवाथसंचयम् ॥ षाण्मासिकंचाब्दिकंवायज्ञार्थंचवनेवसन् ॥ ७ ॥ त्यक्त्वातदाश्विनेमासिस्थमनमन्यत्स
माश्रयेत् ॥ यथावद्दाग्निहोत्रंतुसमिदाज्यैस्तुपालयेत् ॥ ८ ॥ चांद्रकृच्छ्रपराकाद्यैःपक्षमासोपवासकैः ॥ त्रिरात्रैरेकरात्रैश्चआश्रमस्थःक्षिपेद्बुधः ॥ ९ ॥

तिष्ठेन्नाव्रतिकस्तत्वस्वप्यादधस्तथानिशि ॥ अतंद्रितोभवेन्नित्यंवासरंप्रपदैर्नयेत् ॥ १० ॥ योगाभ्यासरतोनित्यंस्थानासनविहारवान् ॥
हेमंतग्रीष्मवर्षासुजलाग्न्याकाशमाश्रयेत्॥ ११॥दंतोलूखलिकोवापिकालपक्कभुगेववा॥स्याद्वाश्मकुट्टिकोविप्रःफलस्नेहैश्चकर्मकृत् ॥१२॥
शत्रौमित्रेसमःशांतस्तथैवसुखदुःखयोः ॥ समदृष्टिश्चसर्वेषुनवसेद्वह्वरंवनम् ॥ १३ ॥ म्लेच्छव्याप्तानिसर्वाणिवनानिस्युः कलौयुगे ॥ नभूपाः
शासितारश्चग्रामोपांतेवसेदतः॥ १४ ॥ ग्रामाश्चनगरादेशास्तथारण्यवनानिच ॥ क्षितीशरक्षितान्येवसर्वेषांफलदानिहि ॥ १५ ॥ प्रथमंभूप
तेस्तस्मात्कृत्यंशंसेद्द्विजाग्रतः ॥ यागंवारण्यवासंवाकुर्वीततदनुज्ञया ॥ १६ ॥ सुत्रामानलवायूनांयमचंद्रविवस्वताम् ॥ ईशवित्तेशयब्रह्म
मात्राभ्योनिर्मितोनृपः॥१७॥पारत्रिकंचयत्किंचित्यत्किंचिद्दैविकंभवेत् ॥ नृपाज्ञयाद्विजातीनांतत्सर्वंसिध्यतिध्रुवम्॥ १८ ॥नृपतेःप्रथमंतं
स्मात्साधीर्यज्ञादिकंद्विजः ॥ रक्षार्थंकथयित्वाथयथाकार्यंसमाचरेत् ॥ १९ ॥ धेनुपूर्वंवसिष्ठस्यह्यासीद्दुर्वाससोमिच ॥ वनवासाश्रम
स्थस्यंवह्निकार्यायतांश्रयेत् ॥ २० ॥ फलस्नेहायदानस्युःकालवैगुण्यतोद्विजाः ॥ तदागोदुग्धसर्पिभ्योमग्निकार्यंसमापयेत् ॥ २१ ॥
तदासर्वेषुकालेषुतथासर्वाश्रमेषुच ॥ गोदुग्धादिपवित्रंस्यात्सर्वकार्येषुसत्तमाः ॥ २२ ॥ वनवासिषुसर्वेषुभिक्षांकुर्याद्वनाश्रमी ॥ तदा
सर्वंप्रकुर्वीतपितृदेवार्चनादिकम् ॥ २३ ॥ अष्टौभुंजीतवाग्ग्रासान्ग्रामादाहृत्ययत्नवान् ॥ वासनासंक्षयंगच्छेद्दानिलाशःप्रागुदीचिकाः ॥
॥ २४ ॥ विधायविप्रोवनवासधर्मान्सर्वानिमानुक्तविधिक्रमेण ॥ संशोध्यपापानिवपुर्विशोध्यब्रह्माधिगच्छेत्परमंद्विजेंद्राः ॥ २५ ॥
आश्रमत्रयधर्मान्प्राक्चरित्वांतेद्विजास्ततः ॥ द्वयंस्यवाततःपश्चाच्चतुर्थाश्रममाचरेत् ॥ २६ ॥ द्विजोत्तमोयदापश्येद्वलीपलितमात्मनः ॥
उपरामस्तथाक्षाणांक्षैण्यंकासस्यसद्विजाः ॥ २७ ॥ समीक्ष्यपुत्रंपौत्रंवादृष्ट्वावादुहितुःसुतम् ॥ अधीत्यविधिवद्वेदान्कृत्वायागान्विधानत ॥

॥ २८ ॥ निश्चयंमनसःकृत्वाचतुर्थाश्रममाविशेत् ॥ प्राजापत्यांविधायेष्टिंवनाद्वासद्मनोपिवा ॥ २९ ॥ समस्तदक्षिणायुक्तान्सर्ववेदांस्ततश्चतान् ॥ अग्नीनात्मनिचारोप्यदंडान्विधिवदाहरेत् ॥ ३० ॥ किंचिद्वेदंसमास्थायतेनधर्मेणवर्तयेत् ॥ वाङ्मनःकायदंडाश्चतथा सत्वादयोगुणाः ॥ ३१ ॥ त्रयोपिनियतायस्यसत्रिदंडीतिकथ्यते ॥ कमंडल्वक्षमालांचभिक्षापात्रमथापरम् ॥ ३२ ॥ काषायवासः कौपीनंकायार्थवस्त्रमेवच ॥ शिखायज्ञोपवीतंचदंडानांत्रितयंतथा ॥ ३३ ॥ द्विकालंविधिवत्स्नानंभिक्षयाचैकभोजनम् ॥ शुद्धैकवृत्तिर्विप्रेषुसत्कर्मनिरतेषुच ॥ ३४ ॥ भिक्षाचर्यायतेःप्रोक्ताव्रतचर्यातथैवच ॥ असंभाषश्चशूद्रेषुतथान्यशिल्पिकारुभिः ॥ ३५ ॥ अवक्त्वंतथास्त्रीभिःकृत्यमेतद्यतेःस्मृतम् ॥ खकदंबकसंरोधोनित्यमेकांतशीलता ॥ ३६ ॥ सदैवप्राणसंरोधःसदैकाध्यात्मचिंतनम् ॥ मृद्वेणुदार्वलाब्वश्ममयंपात्रंयतेःस्मृतम् ॥ ३७ ॥ शुद्धिरद्भिरमीषांतुगोवालैश्चावघर्षणम् ॥ नदंडैर्नचदंडेनविनावातेनवांतथा ॥ ३८ ॥ मोक्षावाप्तिर्भवेत्पुंसांकिंतुसाध्यात्मचिंतनात् ॥ समत्वंसुखदुःखेषुतथाविद्वेषरागयोः ॥ ३९ ॥ आत्मान्ययोःसमानत्वमजस्रंचात्मचिंतनम् ॥ यतिभिस्त्रिभिरेकत्वंद्वाभ्यांपंचभिरेववा ॥ ४० ॥ नस्थातव्यंकदाचित्स्यात्तिष्ठंतोनाशमाप्नुयुः ॥ बहुत्वंयत्रभिक्षूणांवार्तास्तत्रविचित्रिकाः ॥ ॥ ४१ ॥ स्नेहपैशून्यमात्सर्यंभिक्षूणांनृपतेरपि ॥ तस्मादेकांतशीलेनभवितव्यंतपोर्थिना ॥ ४२ ॥ आत्माभ्यासरतस्यैवब्रह्मप्राप्तिर्भवेद्यतेः ॥ त्रिदंडग्रहणादेवप्रेतत्वंनैवजायते ॥ ४३ ॥ अध्यात्मयोगयुक्तस्तुब्रह्मप्राप्त्यभिलाषुकः ॥ जितेंद्रियोहिदंडार्होयुवानस्यात्तथा सरुक् ॥ ४४ ॥ युवानीरुक्तथाभिक्षुरात्मवृद्धिप्रदूषकः ॥ भिक्षुर्गृहेवसेद्यत्रकामार्थंत्सोपिगच्छति ॥ ४५ ॥ तत्संज्ञनातुवृद्धान्वैसहतेनैवपालयेत् ॥ एकरात्रंतुनिवसेद्भिक्षुर्यस्यगृहांगणे ॥ ४६ ॥ तस्यवैतारयेत्पूर्वान्विंशतिंपितृमातृतः ॥ भिक्षुर्यस्यान्नभुक्त्वाब्रह्मयोगाभ्यासरतो

भवेत् ॥४७॥ परिणामक्षयेयोगेनकृतकृत्योगृहीभवेत् ॥ निर्ममोनिरहंकारःसर्वसहःप्रसन्नधीः ॥ ४८ ॥ ब्रह्मण्यात्मनिगोमायौमुनौम्लेछेचतु
ल्यदृक् ॥ चिह्नानियेवैकथितानिधत्तेवर्तेतयेवैविहितेनभिक्षुः ॥ योऽध्यात्मवेदीसततंजिताक्षःसब्रह्मकायेगमनंकरोति ॥ ४९ ॥
वनस्थभिक्षुधर्मान्यान्पानुवाचपराशरः ॥ यथावदभिधायैतान्वक्ष्याम्याश्रमभेदकान् ॥ ५० ॥ ॥ इतिबृहत्पाराशरीयेवानप्रस्थधर्माः ॥
॥ अथातःसंप्रवक्ष्यामिभेदमाश्रमसंभवम् ॥ ब्रह्मचर्यादिकानांचयाथातथ्यंनिबोधत ॥ १ ॥ चतुर्णामाश्रमाणांतुभेदोदृष्टोमनीषिभिः ॥
प्रत्येकशोवदाम्येनंशृणुध्वंद्विजसत्तमाः ॥ २ ॥ ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तथा ॥ एतद्भेदान्प्रवक्ष्यामिश्रुतांश्चपापनाशनान् ॥
॥ ३ ॥ चतुर्धाब्रह्मचारीस्याद्गायत्रोब्रैधसस्तथा ॥ प्राजापत्योबृहच्चेतिलक्षणानिपृथक्पृथक् ॥ ४ ॥ अक्षारलवणाशीस्याद्गायत्र्यभ्यास
तत्परः ॥ वर्ततेभिक्षयानित्यंगायत्रोयंप्रकीर्तितः ॥ ५ ॥ चतुर्धाद्वादशाब्दानियोधीयानश्चतुःश्रुतीः ॥ भिक्षयाब्रह्मचर्येणतिष्ठेद्ब्राह्मःस
उच्यते ॥ ६ ॥ ऋतुकालाभिगामीस्यात्परस्त्रीपरिवर्जकः ॥ वेदानध्येतिभिक्षाभुक्प्राजापत्योऽयमुच्यते ॥ ७ ॥ गुरोर्वागुरुपुत्रस्यतत्प
त्न्यावापिसंनिधौ ॥ योवसेदभ्यसञ्ज्ञानंब्रह्मचारीसनैष्ठिकः ॥ ८ ॥ गृहस्थस्तुचतुर्भेदोवार्ताशालीनवृत्तिकौ ॥ यायावरस्तथैवान्योघो
रसंन्यासिकस्तथा ॥ ९ ॥ कृषिगोरक्षवाणिज्यैःकुर्वन्सर्वाक्रियांद्विजः ॥ विहितैरात्मविद्यैश्चवार्तावृत्तिःसउच्यते ॥ १० ॥ ददात्यध्ये
तियजतेयाजयेन्नचपाठयेत् ॥ कुर्यात्कर्माप्रतिग्राहीशालीनोध्यानकृद्द्विजः ॥ ११ ॥ उक्तस्तत्कारयेदन्यात्क्रियाःकुर्यात्प्रतिग्रही ॥ पा
ठयेच्चैवआत्मानंयायावरःसउच्यते ॥ १२ ॥ शिलोंछाभ्यांसमुत्तिष्ठदुद्धृताग्निश्चवर्तते ॥ आत्मविच्चक्रियाःकुर्याद्घोरसंन्यासिकःस्मृतः ॥
॥ १३ ॥ वानप्रस्थश्चतुर्भेदोवैखानसउदुंबरः ॥ फेनपोवालखिल्यश्चतल्लक्षणमथोच्यते ॥ १४ ॥ फलैर्मूलैरकृष्टान्नैरग्निकर्मवनेवसन् ॥

कुर्यात्पंचमहायज्ञान्सवैखानसआत्मवित् ॥ १५ ॥ प्रातर्दिष्टदिगानीतैफलाकृष्टाशनेंधनैः ॥ उदुंबरोमहाज्ञानीपंचयज्ञाग्निकर्मकृत् ॥१६॥
चतुरोऽभ्यासकृदग्निकार्यंकुर्वन्वनेवसन् ॥ फलस्नेहैःफलैर्वन्यैर्वनानैःश्रुतिचोदितैः ॥ १७ ॥ उद्धृत्यपरिपूताद्भिस्तथायाप्रचितवृत्तिकः ॥
अन्यैर्वन्यैर्वनान्नेश्चफेनपःपंचयज्ञकृत् ॥ १८ ॥ वनस्थोवालखिल्योऽसौवस्त्रेवल्कलचीवरम् ॥ अग्निंकर्मकृदात्मज्ञऊर्जातेसंचितंत्यजे
त् ॥ १९ ॥ चतुर्भेदःपरिव्राट्स्यात्कुटीचरबहूदकौ ॥ हंसःपरमहंसश्चवक्ष्यंतेतेपृथक्पृथक् ॥ २० ॥ पुत्रस्यभ्रातृपुत्रस्यभ्रातृदौहित्रयो
रपि ॥ तदुपांतकुटीस्थोयःसभैक्ष्यवृत्तिभुग्द्विजः ॥ २१ ॥ प्रातिचार्यकृतःसोपियोवासःपूतवारिपः ॥ कंथात्रिदंडभृच्छांतआत्मज्ञः
सकुटीचरः ॥ २२ ॥ ज्ञेयोबहूदकोनामयःपवित्रितपादुकः ॥ शिखासनोपवीतानिधातुकाषायवस्त्रभृत् ॥ २३ ॥ साधुवृत्तिर्द्वि
जौकस्सुभिक्षाभागात्मचिंतकः ॥ बहूदकस्त्वयंज्ञेयोयःपरिव्राट्त्रिदंडभृत् ॥ २४ ॥ एकदंडधराहंसाःशिखोपवीतधारिणः ॥ वार्या
धारकराःशांताभूतानामभयप्रदाः ॥ २५ ॥ वसंत्येकक्षपांग्रामेनगरेपंचशर्वरीः ॥ कर्शयंतोव्रतैर्देहमात्मध्यानरताःसदा ॥ २६ ॥
एकदंडधरामुंडाःकंथाकौपीनवाससः ॥ अव्यक्तलिंगिनोव्यक्ताःसर्वदैवचमौनिनः ॥ २७ ॥ शिखादिरहिताःशांताउन्मत्तवेषधारिणः॥
भग्नशून्यामरोकस्सुवासिनोब्रह्मचिंतकाः ॥ २८ ॥ एतेपरमहंसावैनैष्ठिकाब्रह्मभिक्षवः ॥ उक्तास्तद्व्रतभेदज्ञैरात्मनःप्रार्थनाकराः ॥
॥ २९ ॥ योब्रह्मचर्यव्रतचारिभेदोभेदोगृहस्थस्यतथैवयश्च ॥ योऽरण्यवासिद्विजकर्मभेदोयतेस्तथानैष्ठिकमुक्तिभेदः ॥ ३० ॥ चतु
र्णामाश्रमाणांतुभेदमुक्त्वापराशरः ॥ अथाब्रवीद्द्विजायोगंशृणुध्वंपापनाशनम् ॥ ३१ ॥ ॥ इति श्रीबृहत्पाराशरीयेध
र्मशास्त्रेसुव्रतप्रोक्तसंहितायांब्रह्मचारिगृहस्थवानप्रस्थयतिप्रभृत्याश्रमचतुष्टयभेदकथनंनामदशमोऽध्यायः ॥ १० ॥ ॥ छ॥

बृ. पा. मुमुक्षुवोपिराजंतेदेहादेह्यादिनोयथा ॥ शरीरज्ञास्तथाप्राहुःपरब्रह्मलयंगमाः ॥ १ ॥ खवाय्वग्न्यंबुधात्रीभिरारब्धमाशुनाशि च ॥ तन्मु अ०
॥७७॥ ख्यगुणसंयुक्तंतत्पंचाक्षलयंत्यजेत् ॥ २ ॥ शुक्रशोणितसंयोगात्त्रीकोष्ठपाकसंभवम् ॥ दुःखेनदशभिर्मासैर्नीतंभूरिदोहदैः ॥ ३ ॥
जनन्यादौर्हृदाभावेगर्भस्थस्यापिदुःखिता ॥ अत्यंतंजायमानस्ययोनियंत्रनिपीडनात् ॥ ४ ॥ जातस्यबालंरोगाद्यैर्योगिनीग्रहदोषतः ॥ ११
देहिनःसर्वदाःदुःखंहतजन्मादिकैर्ग्रहैः ॥ ५ ॥ एवंबाल्येमहद्दुःखंमन्मथाद्यौवनेऽपितत् ॥ स्त्रियाविनापिसार्धंवादारिद्र्यैश्वर्ययोरपि ॥ ६ ॥
क्षुत्तृड्भ्यांप्रथमेवित्तरक्षणाद्यैर्द्वितीयके ॥ वृद्धत्वेचानयोर्दुःखंतस्माद्दुःखमयंवपुः ॥ ७ ॥ मांसेनलेपितंबद्धंस्नायुभिःकुल्यसंचयम् ॥ मीढ
मेहनसंपूर्णकफपित्तवसाश्रितम् ॥ ८ ॥ अमेध्यपूर्णभस्त्रावत्सर्वथासर्वदाशुचिः ॥ तृष्णयास्नानगंधाद्यैर्निर्गंधीक्रियतेबहिः ॥ ९ ॥ दुर्ग
धंसर्वरंध्रेषुस्वघ्राणोद्वेगकारकम् ॥ सततंस्रवतेऽमेध्यंकिंदेहस्योच्यतेशुभम् ॥ १० ॥ यददग्धंभवेन्मृत्स्नादग्धंभस्मत्वमाप्नुयात् ॥
मृतस्यदृश्यतेकिंचित्तृष्णाकोपरतस्यतु ॥ ११ ॥ कइहोत्पद्यतेविद्वान्कोवेहाम्रियतेपुनः ॥ यंत्रोपममिदंधर्मेमान्वायुत्यक्तंमृतंभवेत् ॥
॥ १२ ॥ पृथगात्मापृथक्स्वांतंपृथक्खानिदशापिच ॥ पृथक्पृथक्भूतानिपृथक्तेषांगुणोत्करः ॥ १३ ॥ पृथक्प्राणादिवायुश्चक्तद्गतिश्चपृ
थक्पृथक् ॥ पृथक्पृथगितिह्येतच्छरीरंकिमिहोच्यते ॥ १४ ॥ आरंभकाणिकान्यस्यतेषुयांतितदंशकाः ॥ आत्माचान्यदवाप्नोतिपावनो
यंपुनर्वपुः ॥ १५ ॥ यःपश्येच्छृणुयाज्जिघ्रेत्स्वादेद्द्रिंद्यात्स्मरेद्वदेत् ॥ स्वप्याच्चजागृयाद्गच्छेद्धिंद्याद्दद्यायजेज्जपेत्पठेत् ॥ १६ ॥ गृह्णीयादर्प
येद्विद्याज्जायेतजनयेदपि ॥ सोस्तिकश्चित्परोदेहाद्योदेहीतिनिगद्यते ॥ १७ ॥ नैकःसस्यान्नदेहेस्मिन्प्रत्यभिज्ञाकथंभवेत् ॥ एकदृष्टदृष्टरू ॥७७
पस्यपुनरन्येनपश्यतः ॥ १८ ॥ अद्राक्षंयदहंवस्तुतदेवैतत्स्पृशाम्यथ ॥ यथास्प्राक्षंचपश्यामिप्रतीतिर्यस्यजायते ॥ १९ ॥ दर्शनंस्पर्श

नाभ्यांचग्रहणादेकवस्तुनः ॥ अस्तिह्यात्मापरोदेहाद्योदेहीतिनिगद्यते ॥ २० ॥ गृहीचगृहमध्यस्थोभग्नंकिंचित्समाचरेत् ॥ देहेक्षि
तादिसंरोहात्तथादेह्यास्तिकश्चन ॥ २१ ॥ ज्ञानयोगफलेनायंकर्मयोगफलेनच ॥ सएवयुज्यतेकुर्वन्नुदेहयौतस्यतावीति ॥ २२ ॥
तार्यतेकर्मणाचायंबाध्यतेकर्मणापिच ॥ उभयथापिनैवात्रप्रत्यक्षंदृश्यतेद्विजाः ॥ २३ ॥ भायावित्वंचमूकत्वमतिरिक्तांगताक्रमात् ॥
अवाक्कंधान्यहर्तृणांपिशुनेपूतिनासिता ॥ २४ ॥ भरतोवर्णकैश्चित्रैःस्वदेहंचित्रयेद्यथा ॥ कुर्वन्नानाविधंकर्मतथात्माकर्मजास्तनूः ॥२५॥
जरायुजांडजादीनिवपूंषियोऽग्रहीन्निजैः ॥ कर्मभिर्वर्णभेदैश्चवित्तदौर्गत्यरुग्युतम् ॥ २६ ॥ बधिरक्लीबनिःस्वांधाजायंतेपुरुषाधमाः ॥
निरेनसःपुनर्भूत्वाविद्वद्विप्रकुलेषुच ॥ २७ ॥ महाकुलेषुचान्येषुजायंतेलक्षणान्विताः ॥ धनवंतःप्रजावंतोविद्यावंतोयशस्विनः ॥ २८ ॥
रूपसौभाग्यसंयुक्ताःसर्वेषामुपकारकाः ॥ ब्रह्माभ्यासरताःशांताःषट्कर्मनिरतास्तथा ॥ २९ ॥ पंचयज्ञकृतोनित्यमग्निष्टोमादिषु
स्थिताः ॥ द्विजोपास्तिकरानित्यंगुर्वाचार्यादिपूजकाः ॥ ३० ॥ चतुराश्रमवर्णानांसेविनःसमदर्शिनः ॥ गुणैःसर्वैःसमायुक्तास्तेजस्वि
नोजनप्रियाः ॥ ३१ ॥ एवंभूताश्चयेविप्रास्तेषांविष्णुःसदांतिके ॥ विष्णुश्चसर्वदेवत्यस्तस्माद्विष्णुर्मनाभवेत् ॥ ३२ ॥ देवपूजा
कृतांनित्यंगुरूपास्तिकृतांतथा ॥ ब्रह्मैवाभ्यसतांसम्यग्ब्रह्मसान्निध्यमृच्छति ॥ ३३ ॥ उपास्यंतत्सदाब्रह्मयावत्सांधनकंस्मयत् ॥ ब
ह्मपायान्विदित्वायःसंस्मरन्नेहमानवः ॥ ३४ ॥ वदंतिब्रह्मवेत्तारोब्रह्माभ्यासमनेकधा ॥ ब्रह्मापिद्विविधंधीमन्नपरंपरमेवच ॥ ३५ ॥
समत्वमपरंब्रह्मशब्दब्रह्मेतिकीर्तितम् ॥ प्रणवाख्यंत्रिरूपंतद्यागेवाहिविशेषतः ॥ ३६ ॥ प्राणायामैस्तदभ्यस्यपूरकाद्यैश्चवायुभिः ॥
पूरकःकुंभकोवायूरेचकस्तुतृतीयकः ॥ ३७ ॥ योनव्यावर्ततेवायुर्नासाग्रान्निसरेद्बहिः ॥ पूरयेच्छ्वासयोगेनपूरकंतंविदुर्बुधाः ॥ ३८ ॥

आपूर्येनिश्चलीकृत्ययद्भिरंध्यायतेनिलः ॥ श्वासयोगंवदंत्येनंकवयःकुंभकंत्विति ॥ ३९ ॥ कुंभकःपवनःसंस्याद्योवहिर्नैवमुच्यते ॥
रेचकंतंविदुस्तज्ज्ञारेचतेयःशनैःशनैः ॥ ४० ॥ नवेगाद्रेचयेद्वायुंसर्वथानिर्गतेभयात् ॥ मोचयेन्मंदमंदंतुवह्निःस्यात्कुंभितोयथा ॥४१॥
नासाग्रस्थितपाणिस्तुसत्वीषच्चालनक्षमम् ॥ अनिलंरेचयेद्योगंनमंदंनातिवेगतः ॥ ४२ ॥ नज्ञायतेनिलोयस्यानिःसरन्नासिकाग्रतः ॥
यस्यास्तेकुंभतोजस्रंप्राणयोगीसउच्यते ॥ ४३ ॥ दीर्घायुर्दृढंपरंज्ञानंसमस्तायोगसिद्धयः ॥ देहेतस्यावतिष्ठंतेयेनप्राणोवशीकृतः ॥ ४४॥
यत्रतिष्ठतिजीवःस्यान्निःसृतेमृतउच्यते ॥ सकिंनधार्यतेप्राणोब्रह्माप्तिःसतियत्रतु ॥ ४५ ॥ प्राणएवायमात्मास्तेप्राणोदेहस्यवाहकः ॥
शरीरान्निर्यतेप्राणेनात्माविग्रहवाहकः ॥ ४६ ॥ देहंत्यक्त्वायदाजीवोवहिराकाशमास्थितः ॥ तदानिर्बंधयोवायुर्भवेदत्रनसंशयः ॥
॥ ४७ ॥ सतदासर्वदेहेषुनासाग्रमास्थितःशिवः ॥ प्रत्यक्षःसर्वभूतानांतिष्ठतेनचलक्ष्यते ॥ ४८ ॥ नश्वसितियदावायुस्तदानिष्फल
उच्यते ॥ नाभिस्थितंतुविज्ञायजन्मबंधाद्विमुच्यते ॥ ४९ ॥ देहस्थःसर्वसत्वानांसजीवतिशृणोतिच ॥ धर्माधर्मैरवद्धोदेहेदेहे
व्यवस्थितः ॥ ५० ॥ सकृत्पंकजसंस्थःसन्नधश्चोर्ध्वंप्रधावति ॥ धर्माधर्ममहापाशैर्गृहीतःसन्प्रवर्तते ॥ ५१ ॥ ऊर्ध्वमुच्छ्वसते
यावत्प्राणाख्यस्तुसमीरणः ॥ तावत्प्राणस्तुविज्ञेयोयावन्नासाग्रमास्थितः ॥ ५२ ॥ अत्रस्थंनिष्कलंब्रह्मयावन्नश्वसितिद्विजाः ॥
श्वासेनचसमायोगादाकाशात्पुनरागतिः ॥ ५३ ॥ नासाग्रसमालीनस्तत्स्थोनिष्कलउच्यते ॥ सजीवइतिविख्यातःसविष्णुःसमहेश्व
रः ॥ ५४ ॥ ध्यातव्यादेवतास्तत्रक्रमेणपूरकादिषु ॥ ब्रह्मविष्णवीश्वरास्तेषुध्यानेषुविधिवद्द्विजैः ॥ ५५ ॥ नीलपंकजवच्छ्याममा
सीनंनाभिमध्यगम् ॥ महात्मानंचतुर्बाहुंपुरस्केतुहरिंस्मरन् ॥ ५६ ॥ हृत्पद्मेकुंभकेध्यायेद्ब्रह्माणंकमलासनम् ॥ रक्तेंदीवरवर्णाभंचतु

क्रंपितामहम् ॥ ५७ ॥ रेचकेशंकरंध्यायेल्ललाटस्थंत्रिशूलिनम् ॥ शुद्धस्फटिकसंकाशंसंसारार्णवतारकम् ॥५८॥ एवंपवनसंरोधाद्देवता
त्रयचिंतनात् ॥ अग्निवाय्वंभसांयोगादान्तरंशुध्यतेत्रिभिः ॥५९॥ निरोधादमवद्वायुस्तस्मादग्निस्ततोजलं ॥ इतित्रिदेवतायोगाच्छुध्यतेऽतः
पुनर्द्विजाः ॥६०॥ व्याहृतिप्रणवोपेताःप्राणायामास्तुषोडश ॥ अपिभ्रूणहणंमासात्पुनंत्यहरहःकृताः ॥ ६१ ॥ प्रातरह्नश्चसायंचपूरकंब्रह्म
णोऽतिकम् ॥ रेचकेनतृतीयेनप्राप्नुयात्परमंपदम् ॥६२॥ नप्राणेनाप्यपानेनवायुवेगेनमोचयेत् ॥ प्रागुक्तेनप्रयोगेणमोचयेत्प्राणसंयमी ॥६३॥
शरीरंचशिरोग्रीवाविद्वान्पाणीचपादयं ॥ सर्वांगानिश्चलीकृत्यआपूर्यसर्वनाडिकाः ॥६४॥ संवृत्यांगानिसर्वाणिकूर्मवद्ध्यानकृद्द्विजः ॥ बद्धासनो
ऽचलांगस्तुकुर्यादसुनिरोधनम् ॥६५॥ कृत्वासुसंयमंविद्वान्विधिवत्सउपस्पृशेत् ॥ अंतरंशुध्यतेयस्मात्तस्मादाचमनंस्मृतम् ॥६६॥ युत्युक्तः
प्राणसंरोधैर्देवतात्रयसंयुतः ॥ त्रिमात्रप्रणवस्तत्रध्यातव्यःसर्वयोगिभिः ॥ ६७ ॥ स्मर्यमाणस्ययातस्यविश्रांतिःस्यादमात्रिके ॥ तत्प
रंनिष्कलंज्ञानंतद्विदुर्ब्रह्मचिंतकाः ॥ ६८ ॥ मृदुमध्यांतसत्वाच्चस्थूलसूक्ष्माणुभावतः ॥ त्रिविधंप्राणसंरोधंविदुस्तेतत्त्ववेदिनः ॥ ६९ ॥
क्रियमाणोविशेषेणप्रत्याहारोयमुच्यते ॥ सर्वंप्रागुक्तमेवास्यविशेषंतुनिबोधत ॥ ७० ॥ वाह्यंवायुंतथोत्साहंतमाकृष्यशनैःशनैः ॥ निरु
ध्याद्विधिवद्योगीप्रत्याहारःसउच्यते ॥ ७१ ॥ व्याहृत्याभिमुखीकृत्यखानियत्रनिरुध्यच ॥ चिंतयेन्निश्चलीकृत्यप्रत्याहारोयमुच्यते ॥
॥ ७२ ॥ नविसर्गनतद्धीनांसानुस्वारविपर्ययः ॥ हृद्याकाशनिविष्टंयदचलत्वंप्रयातितत् ॥ ७३ ॥ प्राणादिवायवःस्थूलाःसंकल्पाद्यास्त
थाणवः ॥ निरोद्धव्यास्तथाप्येतेप्राणसंयमकारिभिः ॥ ७४ ॥ वायुरेकोपिदेहस्थःक्रियाभेदेनभिद्यते ॥ प्रकर्षेणासमंताच्चनयना
दिक्रियास्मृताः ॥ ७५ ॥ भविष्यातीतकालेभ्यःकर्मभ्यश्चानुसंयमी ॥ सर्वानिलांस्तथाखानिनिरुध्यैकत्रधारयेत् ॥ सधीमान्वे

दविद्विद्वान्सयोगीब्रह्मवित्तमः ॥ ७६ ॥ स्थानंद्विजन्माविधिवन्नितांतमभ्यस्यमंयातिविधेःपरस्य ॥ परांशरोक्तैर्बहुभिप्रकारैरुक्तो
विधिःप्राणनिरोधनस्य ॥ ७७ ॥ प्रत्याहारोविशेषस्तुप्रोक्तस्तस्यैववित्तमः ॥ यमभ्यस्याप्नुयाद्ब्रह्मसर्वदापरमव्ययम् ॥ ७८ ॥
इतिप्राणायामप्रत्याहारविधिः ॥ एतैस्तुपुनरावृत्तिःकदाचिदिहदृश्यते ॥ संस्मृतिंनाप्नुयाद्येनशक्तिसूनुस्तदब्रवीत् ॥ ७९ ॥ उक्तस्तुसं
यमःपूर्वंत्रिविधोमलनाशनः ॥ निबोधध्वंचतुर्थंतुध्यानंप्रणववेधसः ॥ ८० ॥ विधिवत्प्रणवध्यानमेकाग्रचित्तस्तुयोऽभ्यसेत् ॥ ब्रह्मा
भ्येतिसमुक्तात्मासयोगीयोगिनांवरः ॥ ८१ ॥ तद्ध्यानमसुसंरोधस्तुर्यंसम्यगिहोच्यते ॥ तदन्यार्थानपेक्षंचचित्तक्षेपविवर्जितम् ॥
॥ ८२ ॥ चतुर्णामाश्रमाणांतुभेदमुक्त्वापराशरः ॥ अथाब्रवीद्द्विजायोगंशृणुध्वंपापनाशनम् ॥ ८३ ॥ ॥ इतिश्रीबृहद्धर्मशास्त्रे
सुव्रतप्रोक्तसंहितायामाश्रमविवेचनंनामएकादशोध्यायः ॥ ११ ॥ तच्छांतंनिर्मलंशुद्धंध्यातव्यंहृत्सरोरुहे ॥ तद्धेयंतद्वरेण्यंचबीजंमुक्ते
स्तदुच्यते ॥ १ ॥ संचिन्त्यव्याहृतीःसप्तप्रणवाद्यास्तदंतिकाः ॥ सम्यगुक्तमिदंध्यात्वापरब्रह्मणियोजयेत् ॥ २ ॥ हुतभुक्पवनोजीवस्त्रयोप्यते
हृदिस्थिताः ॥ एतत्सर्वंतुचैकत्रसंस्मरेद्ध्यानकृद्द्विजः ॥ ३ ॥ ओंकारवर्त्मनातेनउद्धृत्योपरियोजयेत् ॥ योजयेत्सर्वमप्येतत्सिद्धयोगी
सउच्यते ॥ ४ ॥ शून्यभूतंतुयःप्राणंश्वासजीवेतिसंज्ञितम् ॥ यस्मादुत्पद्यतेश्वासःपुनस्तत्रानिवेशयेत् ॥ ५ ॥ आद्यंतंप्रणवंविद्वान्घटाकाश
वदभ्यसेत् ॥ सपश्येन्निर्मलंशुद्धंपुरुषंतमसंशयम् ॥ ६ ॥ अंतर्वक्रंबहिःसंपतत्सर्पवत्कुंडलीकृतः ॥ ध्यातव्यःप्रणवस्त्वत्रमध्यगंधामसं
स्मरेत् ॥ ७ ॥ समात्रात्मासबिंदुश्चतदेवपरमंपदम् ॥ तदभ्यस्यहितज्ज्ञात्वासतस्मिन्नेवलीयते ॥ ८ ॥ प्रथमंप्रणवोवक्तेत्र्यक्षरप्रथमाक्ष
रः ॥ सर्वज्ञत्वमवाप्नोतिसप्राप्यपरमंपदम् ॥ ९ ॥ पंचमंतुपदंविद्वान्मूर्धन्यंमवतिष्ठते ॥ नादबिंदुसमभ्यासात्प्राप्नुयात्परमंपदम् ॥ १० ॥

यदिप्राप्यनिवर्त्ततेभारत्यःस्वांतमेवच ॥ सर्वेष्यमातृकावर्णापुनस्तत्रविशंतिच ॥ ११ ॥ वर्णात्मासन्नवर्णस्तुसमस्तवर्णजीवनम् ॥ नदा
धेनापिह्रस्वंचनघोषंनाप्यघोषवत् ॥ १२ ॥ नविसर्गेनतद्धीनंसानुस्वारविपर्ययः ॥ हृद्याकाशनिविष्टंयदचलत्वंप्रयातितत् ॥ १३ ॥
ज्ञानंयोगेत्रिषष्टिर्वैभवंतिह्यक्षराणिच ॥ तत्पदेयोगिभिर्ध्येयंव्योमयस्यतुमध्यगम् ॥ १४ ॥ व्योमांतंसततंध्येयमनंताकाशमव्ययम् ॥
चिंतयामोवयंयद्वैधियोयोनःप्रचोदयात् ॥ १५ ॥ एतद्ब्रह्मत्रयीरूपमेतद्वर्गत्रयीमयम् ॥ एषासंपरमामुक्तिर्गत्वायांननिवर्वते ॥ १६ ॥
आदायंचापंप्रणवंचबाणंसंधायचात्मानमवेक्ष्यलक्ष्यम् ॥ सतद्विधिंतत्रनिवेश्ययोगीप्राप्नोतिनित्यंपदमुक्तिकामः ॥ १७ ॥ उद्देश्यतः
किंचिदवादिविद्वान्ध्यानंविधेयंध्वनिपूर्वकस्य ॥ सर्वविधानंविधिवच्चसम्यग्वक्तुंसमर्थोविधिरेवचास्य ॥ १८ ॥ ॥ इतिबृह० धर्मशास्त्रे
प्रणवध्यानविधिः ॥ ॥ अथान्यत्संप्रवक्ष्यामिविधानंध्यानकर्मणः ॥ ननाभतोविधिःकार्यःपरब्रह्मातिकारकः ॥ १ ॥ कर्मात्माकाश्चेदि
त्युक्तःपरात्माकिंपरंततः ॥ वक्ष्यमाणमिदंविप्राःशृणुध्वंभक्तितत्पराः ॥ २ ॥ स्वीयेनकर्मणायेषांशरीरग्रहणंभवेत् ॥ कर्मात्मानस्तउ
च्यंतेनिर्गताःपरमात्मनः ॥ ३ ॥ यान्नस्पृशंतिसत्वाद्यास्तथासत्वादयोगुणाः ॥ कादाचित्कंनकर्मास्तिपरमात्मातवःपरम् ॥ ४ ॥ निष्ठा
नाशोनविद्येतेगुणायंनस्पृशंतिहि ॥ सोजःसन्कथमेतास्मिंन्लोकजातोभिधीयते ॥ ५ ॥ स्वात्मानमेवचात्मानंवेष्टयेत्कोशकारवत् ॥ कर्म
णैवंप्रजातस्तुबाह्यस्वार्थविमोहितः ॥ ६ ॥ तस्माद्विवर्जयेत्कर्मस्वर्गादेरपिसाधकम् ॥ संसरेत्स्वर्गतःकर्मक्षयेतुसपुनर्गतः ॥ ७ ॥ ससैषापरमा
विद्वन्ब्राह्मण्यपाशमोक्षयोः ॥ कर्मस्थानमियंधात्रीकृतमत्रोपभुज्यते ॥ ८ ॥ वैदिकःकर्मयोगश्चादिव्यावर्तकस्तुस येनेहावार्तिकृत्त्वंचज्ञानया
गमतोभ्यसेत् ॥ ९ ॥ हृदिनिःसृतनाडीनांसहस्राणांद्विसप्ततिः ॥ तन्मध्यावस्थितंतेजःशशिप्रभेवभातियत् ॥ तन्मध्यमंडलेह्यात्मा

विधूमाचलदीपवत् ॥ सज्ञांतव्योविधित्वातंसंसरेन्नपुनर्यतः ॥ ११ ॥ पुंटीभूतमधावक्रतद्धृत्पद्मव्यवस्थितम् ॥ नाभ्युत्सादनवातेनकृ
त्वोर्ध्वास्यंविकासयेत् ॥ १२ ॥ विकास्यतस्यमध्येतुचलदीपशिखेवतत् ॥ तदूर्ध्वंनिःसरेच्छुभ्रंसूक्ष्मंतच्चविचिंतयेत् ॥ १३ ॥ लल
नाद्वारनिर्गच्छत्तद्योगीमूर्ध्निचिंतयेत् ॥ तावत्तांचिंतयेद्यावन्निरालंबत्वमृच्छति ॥ १४ ॥ निरालंबंयदाध्यानंकुर्वतोनिश्चलंभवेत् ॥
तदातदुच्यतेब्रह्मसयोगीब्रह्मवित्तमः ॥ १५ ॥ तत्पदंचपदातीतंतत्प्राप्तोमुक्तउच्यते ॥ इतिध्यानंविधातव्यंमुक्तिकृत्संद्विजैर्द्विजाः ॥१६ ॥
भूतानामात्मभूतस्यतानिसम्यक्प्रपश्यतः ॥ विमुह्यंत्यमरामार्गेपदंकिमपदस्यतु ॥ १७ ॥ योनतिष्ठतिनोयातिनकिंचित्सर्वएववयः॥ अवा
ग्योवाङ्मयोयश्चसकलश्रुतिरश्रुतिः ॥ १८ ॥ योप्यंतिकेदवीयांश्चयोस्तिनास्तिस्वरूपतः ॥ यस्यतत्त्वस्यसंवित्तिःसतस्मिन्नेवली
यते ॥ १९ ॥ यस्तुसर्वाणिभूतानिपश्यत्यात्मगतानितु ॥ आत्मानंतेषुसर्वेषुततोयोनविरज्यते ॥ २० ॥ सर्वभूतात्मभूतात्मायद्यत्पश्य
तिधीमतिः ॥ शोकमोहोकुतुस्तस्यह्येकत्वमनुपश्यतः ॥ २१ ॥ समाप्तावुत्तरादिर्यन्मंत्रब्राह्मणयोर्द्विजाः ॥ ओंखंब्रह्मेतिधाम्नायो
दर्शकश्चेतिवेधसः ॥ २२ ॥ आत्मज्ञानेबहूपायाउक्तास्तद्धिमनीषिभिः ॥ तैस्तैःसर्वैःसमंतव्योज्ञातव्यश्चोपदेशतः ॥ २३ ॥
नवेदैर्ज्ञेयतातस्यनशास्त्रैर्बहुभिःश्रुतैः ॥ नयज्ञैर्नजपैर्होमैःशौचैर्वाग्मितयापिन ॥ २४ ॥ गुरूपदेशतोभक्त्यासम्यगभ्यासतस्तथा ॥
ज्ञातव्यःपरमात्मैवंभक्तितस्तत्परेणच ॥ २५ ॥ ध्यानार्हज्ञानस्यतद्भक्तेर्यत्रविश्रमतेमनः ॥ तदेवोपदिशेत्तस्यवस्तुज्ञानोपबोधकम् ॥
॥ २६ ॥ मनोयस्यविषण्णंतुज्ञायतेयत्रवस्तुनि ॥ सतुध्यायेत्तदेवेतियावत्स्याद्ध्यानसंततिः॥२७॥ तत्रध्यानेतुसंलग्नेहरावात्मनिवाद्गुनः॥
ध्यानंचयोजयेद्योगीतंनिरालंबतांनयेत् ॥ २८ ॥ योगशास्त्रेषुयत्प्रोक्तंरहस्यारण्यकेषुच ॥ तत्तथोपदिशेद्ध्यानंध्यायेदापितथैवच ॥ २९ ॥

प्रवदंत्यन्यथाकेचिच्छुभादिभेदतस्त्वतः ॥ त्रैविध्यंविदुषाविद्वन्सिद्धिदंत्वपरंपरम् ॥ ३० ॥ श्रुतिजंवाग्जचिंताजंभावनाभवमेवच ॥ त्रै
विध्यमात्मनासिद्धंचेद्योगाभ्यासफलप्रदम् ॥ ३१ ॥ आत्मशक्तिःशिवश्चेतिचैतन्यामितिसंज्ञितम् ॥ उत्तरोत्तरवैशिष्ट्याद्योगाभ्यासप्रव
र्तत ॥३२॥ सएकोनिष्कलीभूतःकर्मात्मायमुपार्जितः ॥ नबिभेतिसएकाकीपरेषांजायतेभयम् ॥ ३३॥ तदेवंगतिभिर्ब्रह्मध्यानंयस्यास्ति
योगिनः ॥ सविशेत्तमजंशांतंकदाचित्संसरेन्नतु ॥ ३४ ॥ त्र्यंबकश्चचतुर्वक्त्रश्चतुर्बाहुःपरेश्वरः ॥ एकएवमहेशोवैतज्ज्ञास्त्रिधेतिकीर्त्यते॥
॥ ३५ ॥ नाभिमध्यस्थितंविद्धिविद्धिविक्रन्सुनिर्मलम् ॥ रविवद्भ्राजमानंतुकाशद्रश्मिगणैर्द्विजाः ॥ ३६ ॥ चिंतयेद्हृदिमध्यस्थंदीप्तिम
त्सूर्यमंडलम् ॥ तस्यमध्यगतःसोमोवह्निश्चंद्रशिखोमहान् ॥३७॥ तन्मध्येतुपरंसूक्ष्मंतद्ध्यायेद्योगमात्मनः ॥तन्मध्येचिंतयेदेतद्वक्ष्यमाण
क्रमेणतु ॥ ३८ ॥ बिंदुमध्यगतोनादोनादमध्यगतोध्वनिः ॥ ध्वनिमध्यंगनस्तारस्तारमध्यगतोंशुमान् ॥ ३९ ॥ तस्यमध्यगतंब्रह्म
शांततस्यतुमध्यगम् ॥ परंपदंतुयच्छांतंसम्यगुद्धृत्ययोजयेत ॥ ४० ॥ जीवात्मकायंमध्यस्थस्तत्रापिदेहवर्जितः ॥ वक्त्रनासापुट
स्थस्तुभुंजतेविषयान्प्रभुः ॥ ४१ ॥ इत्येतद्ध्यानमार्गंतुवदंतिकवयोद्विजाः ॥ केचिदन्येन्यथाब्रूयूरूपंब्रह्मविदोविधेः ॥ ४२ ॥ ननामा
पिहिदुःखस्यशर्मयत्रानिरंतरम् ॥ ब्रह्मणोरूपमानंदंतन्मुक्तावुपलभ्यते॥४३॥सर्वव्यापीयएकस्तुयश्चानंतश्चभावकः॥ सुमंतव्योजरोन्नात्मा
सर्वव्याप्यचलःस्थितः ॥ ४४ ॥ एकंव्योमयथानेकंगृहाद्यैरुपलक्ष्यते ॥ एकोह्यात्मातथानेकोजलाधारेषुसूर्यवत् ॥ ४५ ॥ विश्वरूपो
मणिर्यद्वद्वर्णान्गृह्णात्यनेकशः ॥ उपाधिकस्तथात्मैकोनानाभवादेहिधर्मतः ॥ ४६ ॥ कलाकाष्ठादिरूपेणवर्तमानादिभेदकृत् ॥ एकः
कालोयथानानातथात्मैकोप्यनेकधा ॥४७॥ देहमध्यंस्थितंदेवंयोनध्यायतिमूढधीः ॥सोंकलब्धंमधुत्यक्त्वाक्षिशायाज्ञोगिरिंव्रजेत् ॥ ४८ ॥

बृ. पा.
॥८१॥

यस्तीर्थयानंजेपयज्ञहोमं कुर्याद्रपुण्येवनवेत्तिविष्णुम् ॥ समांसपिंडंपरिहृत्यदूरादज्ञःप्रधावेदधिरुह्यपृष्ठे ॥ ४९ ॥ संभ्राम्यतेविधि- अ०
वशात्करणोग्रचक्रेपापेचकुंभइवधातृवरेणनूनम् ॥ आरोप्यस्वार्थधृतदंडमुखेनपूर्णंहृत्पद्मसंस्थशिवतत्त्वमितिप्रदीप्सः ॥ ५० ॥ द्वौमार्गा- १२.
वात्मनोज्ञेयौब्राह्मणैर्ब्रह्मचिंतकैः ॥ अभियातिविदित्वायौसायुज्यंपरवेधसः ॥ ५१ ॥ विद्धन्धूमादिरेकोवैद्वितीयस्त्वर्चिरादिकः ॥
प्रत्येतव्यःप्रयत्नेनयत्प्रतीतिर्हिजायते ॥ ५२ ॥ धूमःक्षपासितःपक्षोदक्षिणायनमेवच ॥ लोकपितृयश्चसोमश्चमातरिश्वानुवर्णनम् ॥
॥ ५३ ॥ पाथोधात्रीक्रमादेतेसंभवंतिसमाश्रिताः ॥ अर्चिर्दिनंसितःपक्षःस्तथाचैवोत्तरायणम् ॥ ५४ ॥ देवलोकस्तथासूर्यविद्युतंचक्रमा
दिमान् ॥ मानसाःपुरुषायांतिजानंतोब्रह्मलोकताम् ॥ ५५ ॥ यत्रयाताःपुनर्नेहसंसरंतिद्विजातयः ॥ इदमेवब्रवंविद्धमंतव्यंसतत्तंद्विजैः ॥
॥ ५६ ॥ ज्ञानेनयेनविज्ञातुज्ञानमोक्षौचसिध्यतः ॥ गृहारण्यस्थभिक्षूणांत्रयाणामपिधीमताम् ॥ ५७ ॥ ज्ञानंसज्ञानमेतद्वैइतिब्रह्मविदो
विदुः ॥ यथादहतिचैधांसिसमिधश्चाशुशुक्षणिः ॥ ५८ ॥ तस्मात्मार्गद्वयेनापिआत्माज्ञेयोद्विजोत्तमैः ॥ येनजानंतितेयांतिदंदशूकादियो
निषु ॥ ५९ ॥ पतंगत्वंकृमित्वंवाकीटत्वमथवाप्नुयात् ॥ एताभ्योप्यधमास्वेवजायंतेतेकुयोनिषु ॥ ६० ॥ विद्याविद्येचमंतव्येददतःस्वर्ग
मोक्षयोः ॥ विद्यामोक्षप्रदात्रीस्यादविद्यामृत्युजन्मकृत् ॥ ६१ ॥ ज्ञानयोगस्तदाकर्मविद्याविद्येतुबुधैःस्मृते ॥ अपवर्गापवर्गेवाकर्मकृत्वा
निवेदयेत् ॥ ६२ ॥ ॥ कर्मापिक्रियमाणंतुनिरपेक्षंतुमोक्षकृत् ॥ विष्णवेगुरुवेवापिकर्मकृत्वानिवेदयेत् ॥ ६३ ॥ आत्मनःफलमिच्छंस्तु
यत्कर्मकुरुतेनरः ॥ तेनैववांछितप्राप्तिस्तेनान्यन्नोपजायते ॥ ६४ ॥ हरिर्वानित्यमभ्यस्यसर्वभावेनसद्द्विजैः ॥ तदभ्यासादवाप्नोतिमृत्युर्द्विष्ट ॥८१॥
हरिस्मृतिः ॥ ६५ ॥ एकएवहिसध्येयोयत्परंनास्तिकिंचन ॥ विराट्सम्राट्महानेषसदाध्येयोजितेंद्रियैः ॥ ६६ ॥ महांतंपुरुषंवेदर

विरूपंतमःपरम् ॥ ब्रह्मवित्सोतिमृत्युंवैप्रयात्येवानिवर्तकम् ॥ ६७ ॥ एषएवनृणांपंथाब्रह्मान्वेदमुपासते ॥ येयेजन्मस्वनेकेषुविविधि
वच्चैकचेतसः ॥ ६८ ॥ नभक्त्यानापियोगेनन्नाभ्यासैरेकजन्मना ॥ ब्रह्माभिजायतेपुंसांकिंतुस्याद्भूरिजन्मभिः ॥ ६९ ॥ यद्देवाःसत
ताभ्यासान्नब्रह्मप्रतिपेदिरे ॥ तन्मनुष्यैःकथंप्राप्यमेकेनैवचजन्मना ॥ ७० ॥ ज्ञानाभ्यासैर्नतद्ब्रह्मकृतैर्दैवस्वरूपकैः ॥ नप्राप्यतेपरंब्र
ह्मनवाप्यासनमुद्रया ॥ ७१ ॥ बहुभिःकिमुपायैस्तुप्रोक्तैर्वाग्रंथविस्तरैः ॥ एकमेवाभ्यसेत्तत्त्वंयेनाप्तैवसद्धरिः ॥ ७२ ॥ एकैवभावशुद्धि
स्तुयथास्यात्क्रियतांतथा ॥ अन्यत्कुर्यान्मनस्यन्यद्विरुद्धमितिसर्वथा ॥ ७३ ॥ भावःस्वर्गायमोक्षायनरकायापिसस्मृतः ॥ तस्मात्तं
शोधयेद्यत्नाच्छुचिःस्याद्भावशुद्धितः ॥ ७४ ॥ एकस्याःपुत्रभर्तारौहृदयोपरियोषितः ॥ भिन्नभावौभवेतांतौभावमेवंविशोधयेत् ॥ ७५ ॥
परिष्वक्तोनरोनार्यासाह्लादमतियौवनः ॥ तल्पस्थोपिसकामांतांभावहीनोनकामयेत् ॥ ७६ ॥ एकोभावोहरेःकार्योयथासौनिश्चलो
भवेत् ॥ तद्बुध्यापंचतांगच्छन्स्वर्गंमोक्षमवाप्नुयात् ॥ ७७ ॥ त्यक्त्वापिविविधान्भोगांस्तपस्तप्त्वातिदुष्करम् ॥ मृत्युकालेमतिर्या
स्यात्तांगतिंयातिमानवः ॥ ७८ ॥ योगःप्रयोगःकथितःसमासाद्ध्यानस्यमार्गोबहुधाभ्यधायि ॥ योभ्यस्यमानस्तुभवेद्विधानाद्ब्रह्मातिकृत्स्या
न्नियतंद्विजानाम् ॥ ७९ ॥ प्रत्याहारश्चयोगश्चध्यानंविस्तरतस्तथा ॥ उक्तंद्विजहितार्थायब्रह्मावाप्तिकरंतथा ॥ ८० ॥ अंगु
ल्यंगुष्ठजोनादःक्षणःस्यात्तद्द्वयंत्रुटिः ॥ द्वाभ्यांचैवलयस्ताभ्यांनिमेषोपिचतद्द्वयम् ॥ ८१ ॥ तैःपंचदशभिःकाष्ठातास्त्रिंशत्तुकलास्मृ
ताः ॥ तद्विंशतित्रिभागेश्चघटिकेतिप्रकीर्तिता ॥ ८२ ॥ तद्द्वयंचमुहूर्तःस्यात्त्रिंशद्भिःक्षपादिनम् ॥ तत्पंचदशकंपक्षस्तद्द्वयंमासउच्यते ॥
॥ ८३ ॥ तद्द्वयंऋतुरित्युक्तंतद्द्वयंकालउच्यते ॥ तत्सार्द्धमयनंप्रोक्तंतद्द्वयंवत्सरःस्मृतः ॥ ८४ ॥ पंचभिस्तैर्युगःप्रोक्तःसद्वादशकषष्टिकाः ॥

षष्टिकःपष्टिगुणेनोवाकथ्यतेसुगउच्यते ॥ ८५ ॥ षष्टिकःसोपिकालज्ञैःप्रजानाथयुगःस्मृतः ॥ तद्द्वयंतुकलिःप्रोक्तस्तद्द्वयंद्वापरोभवेत् ॥
॥ ८६ ॥ कलित्रयेणत्रेतास्यात्कृतःकलिचतुष्टयम् ॥ कलिभिर्दशभिर्ब्रह्मंश्चतुर्युगमितिस्मृतम् ॥ ८७ ॥ चतुर्युगसहस्रेणब्रह्मणोहः
कल्पउच्यते ॥ अष्टयुगाभवेत्संध्यासायंसंध्याचतावती ॥ ८८ ॥ तदेकसप्ततिगुणंमन्वंतरमितिस्थितम् ॥ मन्वंतरद्वयेनेहशक्रपातःप्रकी
र्तितः ॥ ८९ ॥ एतन्मानेनवर्षाणांशतंब्रह्मक्षयःस्मृतः ॥ ब्रह्मक्षयशतेनापिविष्णोरेकमहर्भवेत् ॥ ९० ॥ एतद्दिवसमानेनशतवर्षेणतत्क्षयः॥
तत्क्षयास्त्रिगुणोष्टाभीरुद्रस्यत्रुटिरुच्यते ॥ ९१ ॥ एकमाब्दिकमानेनप्रयातेब्दशतेद्विजाः ॥ रुद्रश्चात्मनिलीयेतनिष्कलंतंनिरामयम्॥९२॥
निष्कंपंचजगद्व्योमव्योमातीतंपरंपदम् ॥ तन्निदिध्यानसंशुद्धचाप्तसतत्रैवनिलीयते ॥९३॥ परंपराणांपरमंविचिन्त्यंपरात्परंदिष्टपदादतीतम्॥
क्षणादिकालक्रमशोब्दमेवप्रयांतितंतत्परमव्ययंच ॥ ९४ ॥ तमात्मरूपंपरमव्ययंचविश्वेश्वरंचित्तभक्त्याप्रपद्ये ॥ शांतिंचगत्वाविधिनाच
योगीप्रयातितद्वैपरमव्ययंच ॥ ९५ ॥ कालज्ञानेनयोगोयंयोगिभिर्ध्यानकारिभिः ॥ मुमुक्षुभिःसदाध्येयंनिरालंबंपरंपदम् ॥ ९६ ॥ परा
शरोदितंशास्त्रंचतुर्वर्णाश्रयायच ॥ वेदितव्यंप्रयत्नेनसदाध्येयंद्विजातिभिः ॥ ९७ ॥ श्रावयिष्यंतियःश्राद्धेब्राह्मणान्भक्तितत्परः ॥
प्राप्स्यंतिपितरस्तस्यतृप्तिंवैशाश्वतींद्विजाः ॥ ९८ ॥ दशद्वादशचाष्टौवासप्तषट्पंचवात्रयः ॥ दैविकेपैतृकेवापिश्लोकाःश्राव्याद्विजाति
भिः ॥ ९९ ॥ यइदंशृणुयाद्वापिश्रावयेत्पाठयेदपि ॥ सप्रध्वस्ततमःस्तोमोब्रह्मलोकमवाप्नुयात् ॥ १०० ॥ त्रिभिःश्लोकसहस्रैस्तुत्रिभिर्वृ
त्तशतैरपि ॥ पराशरोदितंधर्मशास्त्रंप्रोवाचसुव्रतः ॥ १०१ ॥ नमोस्तुयाज्ञवल्क्यायमनवेविष्णवेनमः ॥ गौतमायवसिष्ठायनमःपाराशरा
यच ॥ १०२ ॥ इतिश्रीबृहत्पाराशरीयधर्मशास्त्रेसुव्रतप्रोक्तसंहितायांयोगोपदेशो नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ समाप्तोऽयं ग्रन्थः ॥

# जाहिरात।

१८ आ० शांतिसार ( सब प्रकारकी शान्ति है ) की० १ रु० ४ आ० गंगास्थित्यनिर्णय भाषाटीका की० २ आ० आचारार्क की० १२ आ० आचारादर्श की० १२ आ० श्राद्धविवेक ( इसमें सब श्राद्धोंकी विधिहै ) की० १२ आ० प्रतिष्ठामयूख की० ६ आ० आशौच निर्णय भाषाटीका की० ४ सनातनधर्मदीपक भाषा ( धर्मशास्त्रानुकूल उदाहरणों समेत सनातन धर्ममण्डन ) की० ८ आ० मातृकाविलास ( अकारसे लेकर सर्व अक्षरमात्रोंका अर्थ और तिनसे विस्तारपाकर बनेहुए अनेकप्रकारके वाणीमय सर्व मंत्रशास्त्र, व्याकरणशास्त्र, संगीतशास्त्र, नीतिशास्त्र, धनुर्वेदशास्त्र, युद्धवर्णन आदिअनेक २ शास्त्रोंका स्वरूप वर्णित है की० २ रु० ८ आ०

---

**पुस्तक मिलनेका ठिकाना–खेमराज श्रीकृष्णदास, "श्रीवेंकटेश्वर" छापाखाना–मुंबई.**

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजेन क्षेमराजेन
स्वकीये "श्रीवेङ्कटेश्वर" यन्त्रालयेऽङ्कयित्वा प्रका
शितम्। संवत् १९५५, शके १८२०.

